July. 1933.

THE
# CHOWKHAMBÂ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 427.

श्रीनारायणेनाविर्भावितम् ।
श्रीशिवेन नारदायोपदिष्टम् ।

# सात्वततन्त्रम् ।

THE
# SĀTWATA TANTRAM
REVEALED BY NĀRĀYAṆA AND
COMMUNICATED TO NĀRADA

By
**S'IVA**

*Edited with Notes etc.,*

By
Vyākaraṇāchārya & Mimansā Tirtha,
PANDIT ANANTA S'ASTRI PHADAKE
Professor, Govt. Sanskrit College, Benares.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Benares City.*

1934.

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवक ४२७

*Printed by Jai Krishna Das Gupta
at the Vidya Vilas Press, Benares.*

THE
CHOWKHAMBA SANSKRIT SERIES.
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
( Work No. 79 )
NO. 427.

THE

# SĀTWATA TANTRAM

REVEALED BY NARĀYAṆA AND
COMMUNICATED TO NĀRADA

By

S'IVA





*Edited with notes etc.,*

By

PANDIT ANANTA S'ĀSTRĪ PHADKE
VYAKARANACHARYA & MIMAMSA TIRTHA
Professor. Govt. Sanskrit College, Benares.

*BENARES.*
JAI KRISHNA DAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series office,*

1934.

चौखम्बा-संस्कृत-ग्रन्थमाला।

( ग्रन्थ-संख्या ७९ )

सी० नं० ४२७



श्रीनारायणेनाविर्भावितम्।

श्रीशिवेन नारदायोपदिष्टम्।

# सात्वततन्त्रम्।

तच्च-

राजकीयपाठशालाध्यापकव्याकरणाचार्यमीमांसातीर्थफडके इत्युपनामकानन्तशास्त्रिणा टिप्पण्यादियोजनापुरःसरं संशोधितम्।



NO. 41

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः—

चौखम्बा-संस्कृत-सीरिज़ आफिस,

बनारस सिटी।

१९९१.

श्रीः



आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबक ४२७

श्री १०८ भैरवाय नमः ।

# भूमिका ।

विदितमेवैतत्समेषां बृहस्पतिकल्पानां विद्वत्प्रकाण्डानां भारते द्विजवरैरनुष्ठीयमानेषु कर्मसु यथा वैदिकं, स्मार्त्तं, पौराणिकं वाऽङ्गं प्रत्यङ्गमस्ति तथा तान्त्रिकमपि। यथा प्रत्यहमनुष्ठीयमानायां प्रातरादिसन्ध्यायां दिग्बन्धमुद्राप्रदर्शनादिकम् । तत् सर्वं क्रियत एव । तथान्येषु कर्मसु । एवं यथा वेदानां प्रवर्तको भगवानादिनारायणो ब्रह्माणमुत्पाद्य तं वेदान्पाठयित्वा तद्द्वारा संसारे प्रवर्तयति तानिति "यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुत्यैव स्पष्टं प्रतिपादितम्। तथा तन्त्राण्यप्यादिनारायणेन सङ्कर्षणशिवनारदादिभ्यः, तैश्चान्येभ्य ऋषिभ्य एवंरीत्या, अथवा, शिवेन पार्वत्यावेवं रीत्या वा प्रगटीकृतानीति—

"यच्चोदितेन हलिना प्रागुक्तं चक्रपाणिना ।
पारम्पर्यागतं तन्मे गदतश्शृणुत द्विजाः ॥" (सा०सं०अ० १८)

तथा—

"प्रथमं सात्वतं शास्त्रं सम्यगध्यापितं मया ।
वासुदेवेन यत्प्रोक्तं शास्त्रं भगवता स्वयम् ॥" (ई०सं० अ०५४)

तथा—

"तथापि सारमुद्धृत्य तन्त्ररूपेण नारद ।
वर्णयामि यथैवोक्तमीश्वरेण दयालुना ॥" ( सा० तं० प० ८ )

इत्यादिवचनजालैः सुस्पष्टम्। एवं यथा वेदानां पूर्वकल्पीयानुपूर्वीं स्मृत्वाऽऽदिनारायणो ब्रह्माणमुपदिशति, तथैव तन्त्राण्यपि गतकल्पीयानुपूर्वीं स्मृत्वा शिवनारदादिभ्य उपदिशतीति वेदानामिव तन्त्राणामपौरुषेयत्वं निर्विवादम्। निर्णयसिन्ध्वादिधर्मशास्त्रीयग्रन्थालोचने बहुषु स्थलेषु तन्त्रस्थानां वचनानामुल्लिखद्भिस्तैस्तन्त्रस्थानुष्ठेयपदार्थसङ्ग्रहः स्मृतिस्थपदार्थसङ्ग्रह इव कियताप्यंशेन कृत इति सुस्पष्टं दरीदृश्यते। तन्त्रेष्वपि सात्विकराजसतामसभेदेन, वैष्णवशैवादिभेदेन, वैदिकावैदिकभेदेनानेकप्रकारको व्यवहारो यथा दृश्यते, तथा संहिताऽऽगमरहस्यादिभेदेनापि बहुविधो भेदोऽवलोक्यते। तत्र सात्विकादिभेदः पञ्चरात्रान्तर्गतेश्वरसंहितायां सुस्पष्टं दृश्यते। तथाहि—

"विज्ञाय पुण्डरीकाक्षः अर्थजालं यथास्थितम् ।
तद्बोधकं प्रणीतं यच्छास्त्रं तत्सात्विकं स्मृतम् ॥
तस्मात् ज्ञातेऽर्थजाते तु किञ्चित्तदवलम्ब्य च ।
स्वबुद्ध्युन्मेषितस्यैव ह्यर्थजातस्य बोधकम् ॥
ब्रह्मादिभिः प्रणीतं यत् तथा तद्धि मिभिर्द्विजाः ।
ब्रह्मादिभिः परिश्रुत्य तत्संक्षेपात्मना पुनः ॥

स्वविकल्पात्प्रणीतं यत् तत्त्वं राजसं स्मृतम्।
केवलं स्वविकल्पोत्थैः कृतं यत्तामसं स्मृतम्" ॥
(ई० सं० १, ५७–६३)

वैष्णवतन्त्राणि तु विष्णुदेवताप्राधान्यं स्वीकृत्य प्रवृत्तानि। शैवानि शिवदेवतां प्रधानं स्वीकृत्य प्रवृत्तानि। एवं शाक्तानि, गाणपत्यादीनि च। वैदिकानि तु वैदिकानुष्ठेयपदार्थसम्बद्धानि सर्वोन्नयनतन्त्रादीनि। अवैदिकानि तन्त्रशास्त्रीयप्रसिद्धपदार्थसम्बद्धानि महामायाशम्बरतन्त्रादीनि। वैदिकान्यवैदिकान्येव दक्षिणमार्गतन्त्राणि वाममार्गतन्त्राणीति नाम्ना प्रसिद्धानि। सर्वाण्यप्येतानि तन्त्राणि नारायणशिवाद्युपदिष्टत्वेन वेदवत् स्वयं प्रमाणानि, उत्पत्तिकालरहितानि, अधिकारिभेदेन व्यवस्थितप्रमाणानीति तान्त्रिकानां सिद्धान्तः।

वेदानां 'अनन्ता वै वेदाः' इत्यादिना यथाऽनन्तत्वं सुप्रसिद्धं, तथा तन्त्राणामपि "तन्त्राण्येतानि विप्रर्षे अयुतान्यर्बुदानि च" इति वचनेनानन्तसङ्ख्याकत्वं सुप्रसिद्धं तन्त्रशास्त्रेषु। तन्त्रेषु संहितारूपाण्यष्टोत्तरशतसङ्ख्याकानि पाञ्चरात्रपदवाच्यानि सात्वतसंहितेश्वरसंहितादीनि [प्र]सिद्धानि। आगमपदेन कामिकाख्यागमकारणागमाजितागमादयः [प्रसि]द्धाः। रहस्यपदेन शिवरहस्यब्रह्मरहस्यविष्णुरहस्यादिरहस्यग्रन्थाः [प्रसि]द्धाः। एवमुपागमोपतन्त्रादिनानेकभेदभिन्नोऽयं तन्त्रशास्त्रमहोदधिः। [त]थेदं तन्त्रं वैष्णवतन्त्रेष्वन्यतमम्। अस्य सात्वततन्त्रेति नाम। अ[न्वर्थ]मेतन्नाम। सत्–सत्वगुणो विद्यते येषान्ते सत्वन्तः–भक्ताः। सा[त्वतानाम]िमदं सात्वतं–भक्तानुष्ठेयपदार्थबोधकं शास्त्रम्।

[या]वत् सात्वततन्त्रपदेन पाञ्चरात्रसंहिता एव स्वीक्रियन्ते स्म [प्र]सिद्धटीकाकारैरपि "तृतीयमृषिसर्गं च देवर्षित्वमुपेत्य सः। तन्त्रं [सात्व]तमाचष्टे नैष्कर्म्यं कर्मणां यतः" अस्य श्रीमद्भागवतश्लोकस्य व्याख्या[प्र]सङ्गेन 'सर्वकर्मनिवर्तकं पञ्चरात्रागमं नाम तन्त्रं कृतवान्' इत्यादि [व्या]ख्यानं कृतम्। तेनैतद् ज्ञायते बहोः कालादारभ्येदं तन्त्रं लुप्तप्राय[मि]व सञ्जातम्। तथा प्रसिद्धाङ्ग्लभाषामुद्रितबृहत्पुस्तकसूचिकायां सात्वततन्त्रपदेन सात्वतसंहितैवोल्लिखिता। एकस्यां सूचिकायां [सा]त्वतसंहितातस्सात्वततन्त्रं भिन्नं मद्रप्रान्तान्तर्गतैकस्मिन ग्रामे कस्य[चि]त् ब्राह्मणस्य गृहे विद्यत इत्यर्थकं लिखितम्। परन्त्वद्ययावन्न दृष्टं केनापि। तदधुना विद्यते नष्टप्रायं वेति न ज्ञायते। टीकाकारैः सात्वततन्त्रपदस्य व्याख्यानं सात्वतसंहितारूपेणाथवा पाञ्चरात्रागमतन्त्ररूपेण कथं कृतमित्यत्र सम्यक् न ज्ञायते कारणम्। सर्वत्र

पाञ्चरात्रग्रन्थे सात्वतशास्त्रशब्दस्यैव बहुशो व्यवहार उपलभ्यते—

"एतेषां सात्वतं शास्त्रमुपदेष्टुं त्वमर्हसि" ।

"तथा दिव्यानि शास्त्राणि सात्वतादीनि चादरात्"

"सात्वतं पौष्करं चैव जयाख्येत्येवमादिकम् ।

दिव्यं सच्छास्त्रजालं तदुक्त्वा सङ्कर्षणादिभिः" ॥

"प्रथमं सात्वतं शास्त्रम्" ।

"सात्वतं पौष्करं चैव जयाख्यं च तथैव च ।

एवमादीनि दिव्यानि शास्त्राणि हरिणा स्वयम्" ॥

इत्यादिषु । कदाचित् तन्त्रशास्त्रपदयोः पर्यायतां स्वीकृत्य शास्त्रं नाम तन्त्रमित्यर्थं मनसि निधाय शास्त्रकृद्भिर्व्यवहारः कृतो भवेत् । भवतु तत्कथञ्चिदपि । सर्वथा तदेतत्सात्वततन्त्रादर्शनमूलकमेव ।

अद्याधुना महत्सौभाग्यस्थानमस्माकं यन्नष्टप्रायमिदं सात्वततन्त्रं दृष्टिपथमायातमिति । इत्थं तत्प्राप्तिप्रकारः । केनचिन्निमित्तेन श्रीगुरुवरमहामहोपाध्यायपदव्यलङ्कृतपर्वतीयनित्यानन्दपन्तानां गृह आगतैरधुना ब्रह्मभूयं गतैः परिव्राड्मूर्धन्यभूतैर्नैपालाभिजनपण्डितगजराजकेसरिमहोदयैर्वार्ताक्रमेणोक्तं सात्वततन्त्रं पाञ्चरात्रसंहितातो भिन्नमस्माकं निकटे वर्तत इति । कीदृक् तदवश्यमेकवारं द्रष्टव्यमिति गुरुवरैः प्रार्थितैस्तैर्झटिति स्वनिकेतनादानीय प्रदर्शितं, तद्दृष्ट्वा च सुन्दरमेतदहो महान् लाभोऽवश्यं प्रकाशनीयमेतदस्य प्रकाशनेन च बहोः कालादारभ्य सात्वततन्त्रविषये स्थितस्य भ्रमस्य निवृत्तिर्भवेदिति निश्चितमेतदिति गुरुभिरुक्ते श्रीयुतगजराजकेसरिभिस्तेषां निकटे तत् संस्थापितम्, तच्च श्रीयुतपण्डितमहोदयैस्साहित्याद्यनेकशास्त्राचार्यैः कलिकातास्थशिवकुमारभवनपाठशालाप्रधानाध्यापकैर्भाण्डारिविष्णुप्रसादमहाशयैः संशोधनार्थं मह्यं प्रदत्तम् । एतच्च पुस्तकं प्राचीनदेवनागरलिपिलिखितं, क्वचित्स्थले खण्डितं, सप्तदशाङ्गुलपरिमितायामयुक्तं, सप्ताङ्गुलविस्तारयुतं, द्विचत्वारिंशत्पत्रपरिमितं प्रतिपत्रमष्टपङ्क्तियुतं प्रतिपङ्क्ति प्रायश्चत्वारिंशदक्षरयुतं, कृष्णरक्तमशीद्वयलिखितं, अधुना जीर्णत्रुटितनेपालदेशजलेखनसाधनपत्रयुतं, लेखनकालोल्लेखरहितं, परन्तु पत्रस्वरूपाक्षरस्वरूपावलोकनेन शतत्रयवर्षेभ्यः प्राक् लिखितमित्यनुमितं वर्तते ।

एतच्च तन्त्रं कैलासशिखरस्थितेन सर्वविद्यानिधानभूतेन शिवेन नारदप्रार्थनातः तं प्रत्युपदिष्टम् । तच्च प्रथमतः श्रीशिवाय नारायणेनोक्तमिति—

"तथापि सारमुद्धृत्य तन्त्ररूपेण नारद ।

वर्णयामि यथैवोक्तमीश्वरेण दयालुना" ॥

इति तद्ग्रन्थस्थलेखत एव ज्ञायते । तत्र श्रीशिवपार्वतीसंवादतोऽनेकानि सर्वलोकहितकारणाणि शास्त्राणि प्रादुर्भूतानि । तानि च गणेशेन लिखितानि पुनश्च पृथ्वीतले श्रोतृभिर्विस्तारितानि । एतत् तन्त्रं शौनकादीनां समक्षं नारदेनोक्तम् । एतच्च सर्वं—

"अथ मां पृच्छती वाक्यं मद्वाक्यं च द्विजोत्तम ।
संलिखत्यप्रमत्तोऽसौ गणेशो मत्सुतोऽन्तिके ॥
मम तेषां च संवादः कला लोकमनोहराः ।
अभवँस्तत्र शास्त्राणि सर्वलोकहितानि वै ॥
तानि तन्त्राणि श्रोतारः समानीय महीतले ।
स्थाने स्थाने मुनिश्रेष्ठ कथयिष्यन्ति भूरिशः ॥
त्वमप्येतं सात्वताख्यं तन्त्रं भगवतः प्रियम् ।
नैमिषे शौनकादीनां समक्षं कथयिष्यसि ॥"

इत्यादिना प्रकृतग्रन्थतो ज्ञायते । सात्वततन्त्राण्यनेकान्यासन्नित्यपि वक्तुं शक्यम् । आचार्याणां हरिमीडे स्तोत्रे "सात्वततन्त्रैः" इत्याकारकबहुवचनान्तोल्लेखात् ।

अस्त्वेतत्, अस्मिन् बहवोऽप्यपाणीयप्रयोगा उपलभ्यन्ते । एतत्तन्त्रं गवतमूलभूतम् । एतदेव नारदेन श्रीमते व्यासायोपदिष्टमिति केषान्मतम् । अन्येषां तु भागवते नारदेन व्यासायोपदिष्टस्वीयचरित्रे कुचिदपि सात्वततन्त्रस्योल्लेखाभावान्नैतदुपदिष्टं व्यासायेति मतं, तच ालोचनीयं विद्वद्वरैः ।

इषु स्थलेषु अस्य श्रीमद्भागवतग्रन्थस्य च स्थलसाम्यमर्थसाम्यं शब्द स्यमवलोक्यत इतित्ववश्यं वक्तव्यं भवेत् । यथा भागवतीयदशमस्कन श्रीकृष्णचरितं सात्वततन्त्रस्थकृष्णसहस्रनामान्तर्गतं तत् "सर्वव्रजज न्द" इत्यादि १२२ श्लोकतः "उषापतिर्वृष्णिपतिः" इत्यादि १९८ श्लोकं य तु सम्पूर्णं प्रायःसूत्ररूपेण तुल्यरूपम् । अर्थसाम्यं तु "यज्ञे पशोरालभ ( सा० ८,११ ) "मानुष्यं प्राप्य ये जीवाः" (सा० ८, १५) "यत्प्रसा तीव्रन्ते" ( सा० ८-१७ ) "लीलामानुषरूपेण देवकीजठरं गतः ( सा -५० ) इत्याद्यनेकस्थलानां "लोके व्यवायामिषमद्यसेवा" ( भा० ११ ११ ) "श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ( भा० २-३ ) "ए किल देवक्यां जातः" ( भा० १०-४३-२४ ) । इत्याद्यनेकस्थले ेति श्रीमद्भागवतपाठकर्तॄणां सुविशदमेव ।

शब्दसाम्यन्तु—

'कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्।
कलौ खलु भविष्यन्ति नारायणपरायणाः"॥ (भा० ११-५-३८)
"अतः कृतादिषु प्रजाः कलौ सम्भवमात्मनः।
वाञ्छन्ति धर्मपरमाः भगवद्भक्तिकारणम्" ॥ ( सा० ५-४२ )

तथा—

"कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः।
यत्र सङ्कीर्तनेनैव सर्वः स्वार्थोऽभिलभ्यते" ॥ (भा०११-५-३५)
"तस्मात्कलौ परो धर्मो हरिकीर्तिः सुकीर्तनम्।
यतः कलिं प्रशंसन्ति शिष्टास्त्रियुगवर्तिनः" ॥ ( सा० ५-४५ )

इत्याद्यनेकस्थलेषु कियताप्यंशेन स्पष्टं, दिङ्मात्रमिहोदाहृतम्। अत्रानेके विषयाः प्रतिपादिताः, ते च बृहद्विषसूचिकायां द्रष्टव्याः। श्रीकृष्णसहस्रनाम तु सर्वथादृष्टचरमेव। अस्य विष्णुसहस्रनामेति-पदेनाप्युल्लेखो दरीदृश्यते, यथा—

"इत्येतत्कथितं विप्र विष्णोर्नामसहस्रकम्" ॥ इति। (सा० ६-२१३)

अत्र प्रदर्शितमार्गेण यदि मनुष्याचरणं भवेत्तर्हि तन्त्रोक्तफललाभ-स्तस्य भवेदिति निश्चितम्।

चौखम्बासंस्कृतसीरिजेत्याद्यनेकमालाग्रन्थसम्पादकहरिदासपुत्र-जयकृष्णदासमहोदयप्रेरणया प्रवृत्तेन मयास्य संशोधनसमय एकमेव हस्तलिखितं पुस्तकं पूर्वोक्तमहोदयगजराजकेसरिणामासादितम्। तत्रत्यकृष्णनामसहस्रसंशोधनसमये श्रीयुतविष्णुप्रसादभाण्डारिमहो-दयैः प्रदत्तमपरं कृष्णनामसहस्रमात्रयुतम्। पुस्तकद्वयमप्यशुद्धिबहुलं त्रुटिताक्षरं प्राचीनलिपिलिखितमासीत्। तत्साहाय्येन यावद्बुद्धि-बलं संशोधनं कृतम्। संशयितस्थलेषु प्रश्नचिन्हं तथा कचि-त्स्थले टिप्पणमपि योजितम्। अस्य संशोधने तथा टिप्पणादियोजने पण्डितवरसाहित्याद्यनेकशास्त्राचार्यभाण्डार्युपनामकश्रीविष्णुप्रसाद-शर्मणां तथानेकदयादाक्षिण्यादिगुणालङ्कृतपण्डितभगवद्भक्तश्रीपद्म-नाभकेसरिमहोदयानां सहायं सुमहत्सञ्जातमतस्तेभ्योऽनेकान् धन्य-वादान् प्रकाशयैतत् संशोधनं श्रीकाशीपुरीपालकश्रीभैरवनाथकृपया सम्यक् समाप्तमतस्तान् प्रणम्यान्ते विद्वत्प्रकाण्डान् ग्रन्थस्यास्य संशो-धने जातं स्खलितमुपेक्ष्य गुणान् गृह्णन्त्विति साञ्जलिबन्धं प्रार्थयति—

| काश्याम्— अधिकवैशाखामावस्यायाम्- मिते विक्रमाब्दे । १९९१ | विद्वद्वशंवदः— अनन्तशास्त्री फडके व्याकरणाचार्यो मीमांसातीर्थश्च। |
|---|---|

# शिवप्रोक्तसात्वततन्त्रस्य
# बृहद्विषयानुक्रमणिका ।

| विषयः । | पृष्ठम् । | श्लोकः । |
|---|---|---|
| दत्तावतारनिरूपणम् | ७ | ११ |
| नरनारायणावतारवर्णनम् | ७ | १२ |
| ऋषभावतारनिरूपणम् | ७ | १३ |
| हंसावतारनिरूपणम् | ७ | १४ |
| पृथ्ववतारवर्णनम् | ७ | १५ |
| दत्तयज्ञेऽष्टबाहुरूपावतारवर्णनम् | ७ | १६ |
| गयावतारनिरूपणम् | ८ | १७ |
| कामदेवशरीरेणावतारः | ८ | १८ |
| प्राचीनबर्हिःपुत्रार्थं धृतावतारवर्णनम् | ८ | १९ |
| स्वारोचिषे द्विजवेदशीर्षजावतारनिरूपणम् | ८ | २० |
| सत्यसेनसंज्ञकावतारनिरूपणम् | ८ | २१ |
| गजेन्द्रार्थं धृतावतारकथनम् | ८ | २२ |
| जयाभिधानावतारनिरूपणम् | ९ | २३ |
| समुद्रमथनार्थं धृतावतारवर्णनम् | ९ | २४ |
| कूर्मावतारवर्णनम् | ९ | २५ |
| धन्वन्तर्यवतारनिरूपणम् | ९ | २६ |
| मोहिनीरूपावतारनिरूपणम् | ९ | २७ |
| मत्स्यरूपावतारकथनम् | ९ | २८ |
| नृसिंहरूपावतारनिरूपणम् | ९ | २९ |
| वामनावतारनिरूपणम् | १० | ३० |
| गदाधरावतारनिरूपणम् | १० | ३१ |
| परशुरामावतारनिरूपणम् | १० | ३२ |
| श्रीरामचन्द्रावतारनिरूपणम् | १० | ३३ |
| श्रीरामचन्द्रस्य विवाहादिनिरूपणम् | १० | ३४ |
| विराधमारीचादिहननवर्णनम् | ११ | ३५ |
| रामविरहवर्णनम् | ११ | ३६ |
| रावणहननादिवर्णनम | ११ | ३७ |
| रामराज्यपालनवर्णनम् | ११ | ३८ |
| भरतकर्तृकगन्धर्वमथनवर्णनम् | ११ | ३९ |
| लक्ष्मणदेहत्यागकथनम | ११ | ४० |
| शत्रुघ्नवर्णनम् | १२ | ४१ |
| अङ्गुष्ठपानरतशिशुरूपावतारवर्णनम् | १२ | ४२ |
| वृत्रभीतनिर्जररोरक्षणाय धृतावतारनिरूपणम् | १२ | ४३ |

| विषयः। | पृष्ठम्। | श्लोकः। |
|---|---|---|
| गुरुद्वेषेण नरकगमनम् | २६ | ४९ |
| भक्तेर्मुख्यं साधनं गुरुसेवा | २७ | ५१ |
| निर्गुणभक्तिमता भूतदया कार्या | २७ | ५३ |
| भागवद्भक्तौ कायादिस्थिरतापेक्षिता | २७ | ५३ |
| प्रेममय्यां सज्जनप्रेमपूर्वकं हरिगुणश्रवणम् | २७ | ६४ |
| सर्वभक्तिमूलं कृष्णपादशरणम् | २७ | ५५ |
| कीदृक् तच्छरणमिति नारदप्रश्नः | २७ | ५६ |
| कायवागादीनां कृष्णे परिनिष्ठाश्रयमित्युत्तरम् | २७ | ५७ |
| प्रथमादिभेदेन कृष्णपादशरणं त्रिविधम् | २७ | ५८ |
| धर्मादौ यद्रक्षकत्वन्तत्कृष्णे कृतं प्रथमम् | २७ | ५९ |
| कलत्रादिषु यन्ममत्वं तत्कृष्णे करणीयमेतन्मध्यमम् | २७ | ६० |
| देहादित आत्मपर्यन्तं यन्ममत्वं तत्कृष्णविषयकं श्रेष्ठम् | २७ | ६१ |
| कृष्णपादशरणयुक्तो भुवनत्रयं पुनाति | २७ | ६२ |
| सर्वापेक्षया भक्त एव विष्णोः प्रियः | २८ | ६३ |
| भक्तस्य लक्षणं कीदृगिति नारदप्रश्नः | २८ | ६५ |
| शिवो भक्तलक्षणं कथयति | २८ | ६८ |
| तत्र मच्चित्तादि निर्गुणभक्तलक्षणम्, | २८ | ६८-६९ |
| हरिसेवातत्परत्वादि भगवद्भक्तलक्षणम् | २८ | ७०-७१ |
| सत्प्रीतिपरमत्वादि लोकप्रणामकभक्तलक्षणम् | २९ | ७२-७३ |
| तत्र आत्मजिज्ञास्यं लक्षणं त्रिविधम् | २९ | ७४ |
| सर्वेषु प्रीतिमत्वमुत्तमवैष्णवलक्षणम् | २९ | ७५ |
| तारतम्येन प्रीतिमत्वमध्यमवैष्णवलक्षणम् | २९ | ७६ |
| प्रतिमादौ प्रेमयुक्तत्वं प्राकृतवैष्णवलक्षणम् | २९ | ७७ |
| इन्द्रियाणां हरौ यस्य स्वाभाविकी रतिस्स भागवत उत्तमः | २९ | ७८ |
| मध्यमभागवतलक्षणम् | २९ | ७९ |
| प्राकृतभागवतलक्षणम | २९ | ८० |
| अन्यदुत्तमभागवतलक्षणम् | २९ | ८१ |
| अन्यन्मध्यमभागवतलक्षणम | २९ | ८१ |
| अन्यत्प्राकृतभागवतलक्षणम् | २९ | ८२ |
| हरिलीलाश्रुतोपचारपरेषु प्रीतिः कार्या | ३० | ८७ |
| भक्तप्रीतिकरणं मुक्तिकारणम् | ३० | ८९ |
| युगानुरूपसेवादिविषये नारदप्रश्नः | ३० | १-३ |
| कृतयुगीयलोकवर्णनपूर्वकं प्रश्नोत्तरकथनम् | ३० | ४ |

| विषयः । | पृष्ठम् । | श्लोकः । |
|---|---|---|
| गृहे कथं वर्तितव्यं तत्प्रकारः | ५९ | २४-२६ |
| सर्वाश्रमिणामपि वैष्णवप्रसङ्गेन सिद्धिः | ५८ | २७ |
| भक्तसङ्ग एव मोक्षादेरपि मूलम् | ५९ | १८ |
| भक्तसङ्गस्य तुलना केनापि नास्ति | ५९ | ३० |
| पशवोऽपि भक्तसङ्गान्मुक्तिङ्गताः | ५९ | ३१ |
| सत्सङ्गेन ज्ञानवैराग्याभ्यां विनापि मुक्तिः | ५९ | ३२ |
| अरसज्ञोऽपि सत्सङ्गेन कर्मबन्धाद्विमुच्यते | ५९ | ३४ |
| भक्तिं ज्ञात्वा पुरुषो मुक्तिं नेच्छति | ६० | ३६ |
| ईदृशगुणसत्वे मनुष्यो अन्यदेवं किमर्थं भजतीति नारदप्रश्नः | ६० | १ |
| अस्मिन्विषये शिवोत्तरम् | ६० | २ |
| आदिसत्ये देवताभिः प्रार्थितेन परमेश्वरेणोक्तमहं युष्मान् यजिष्यामि ततः सर्वे युष्मान् यजिष्यन्ति | ६० | २-५ |
| शङ्करं प्रत्युक्तं कलिपतौरागमैर्माङ्गोपायेति सहस्रनामपाठेन तत्पापशान्तिरिति च | ६० | ६-७ |
| मत्प्रोक्तौरागमैर्लोकाः कृष्णं हित्वा देवता भजन्ति | ६१ | ८-९ |
| नानासुखेच्छया अन्यदेवताभजने नरके वासः | ६१ | १० |
| तथाविधान् लोकान् दृष्ट्वा शिवस्य श्रीकृष्णचरणे शरणं गमनम् | ६१ | ११-१२ |
| शिवकर्तृकश्रीकृष्णस्तुतिः | ६१ | १३-१९ |
| स्तुतिं ज्ञात्वा श्रीकृष्णकर्तृकरूपप्रदर्शनम् | ६२ | २० |
| श्रीकृष्णस्वरूपवर्णनम् | ६२ | २०-२१ |
| तादृशं कृष्णं दृष्ट्वा शिवस्य गद्गदस्वरादित्वम् | ६२ | २२ |
| शिवाय वरदानम् | ६२ | २३ |
| पार्वत्या अपि वैष्णवीभावः | ६३ | २५ |
| कुमारादिकानामपि वैष्णवत्वम् | ६३ | २६ |
| शिवपार्वतीसंवादसमये गणेशःसर्वमलिखत् | ६३ | २८ |
| तत्र सर्वतन्त्राणि प्रादुरभवन् | ६३ | २९ |
| मुनिश्रेष्ठाःस्थाने स्थाने तानि कथयिष्यन्ति | ६३ | ३० |
| शौनकादीनां समक्षं नैमिषे त्वमपि सात्वततन्त्रं कथयिष्यसीति शिवोक्तिः | ६३ | ३१ |
| वेदविहिता हिंसा कथं निषिद्धेति नारदप्रश्नः | ६३ | ३२-३४ |

इति सात्वततन्त्रस्य बृहद्विषयसूचिका ।

श्रीकृष्णाय परब्रह्मणे नमः ॥

# ॥ अथ सात्वततन्त्रम् ॥

श्रीसूत उवाच ।

य एको बहुधा कृष्णः सृष्ट्यादौ बहुधेयते ।
तमहं शरणं यामि परमानन्दविग्रहम् ॥ १ ॥
कैलासशिखरासीनं शिवं शिवकरं परम् ।
नारदः परिपप्रच्छ सर्वभूतहिते रतः ॥ २ ॥
भगवन् श्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
श्रीकृष्णस्याप्रमेयस्य नाना लीलातनूर्विभोः ॥ ३ ॥
यदर्थं यत्स्वरूपं च यद्यत्काले यथा रतः ।
गृह्णाति भगवान् स्वस्थस्तन्ममाख्यातुमर्हसि ॥ ४ ॥
अवतारनिमित्तं यच्चिराद्विग्रहसम्भवम् ।
प्रथमं तत्वतो ब्रूहि त्वं परापरवित्तमः ॥ ५ ॥

श्रीशिव उवाच ।

साधु पृष्टं महाभाग त्वया भागवतोत्तम ।
यदहं नोदितः सम्यग्भगवद्वीर्यवर्णने ॥ ६ ॥
श्रीविष्णोरवताराणां विराजश्च महामते ।
कथने नैव पश्यामि पारं वर्षशतैरपि ।
तथापि सारमुद्धृत्य तन्त्ररूपेण नारद ॥ ७ ॥
वर्णयामि यथैवोक्तमीश्वरेण दयालुना ।
जयपूर्वं नमस्कृत्य गोपरूपिणमीश्वरम् ॥ ८ ॥
वक्ष्ये सात्वततन्त्राख्यं भगवद्भक्तिवर्द्धनम् ।
यदासीदेकमव्यक्तं नित्यं चिद्रूपमव्ययम् ॥ ९ ॥

ब्रह्मेति यद्विदु र्वज्ञा भगवानिति सात्वताः ।
तदासन्तामिवात्मानं मत्वा दृश्य विना विभुः ॥१०॥
द्विप्रकारमभूत्सत्यं सत्ताभूत्वा स्वयं स्वयम् ।
तच्चिच्छक्तिस्वरूपेण प्रकृतिः पुरुषो महान् ॥११॥
सर्वलोकैकनिलयो भगवानिति शब्दयते ।
तस्यैव शक्तिः प्रकृतिः कार्यकारणरूपिणी ॥ १२ ॥
गुणत्रयस्वरूपेण या स्वयं भिद्यते पुनः ।
यः कालस्तं वदन्त्येके हरेश्चेष्टां दुरन्वयाम् ॥ १३ ॥
यस्माद्गुणत्रयक्षोभात्पृथग्भूतोऽभवत्पुरा ।
जीवस्य यस्माद्भवति शुभाशुभफलग्रहः ॥ १४ ॥
तत्कर्म महतो जन्महेतुरव्यक्तमूर्तिमत् ।
भावानां परिणामो हि यतो भवति सर्वदा ॥ १५ ॥
तमेवाहुर्वेदविदः सूक्ष्मरूपं स्वभावकम् ।
उक्तोऽयं पुरुषः साक्षादीश्वरो भगवत्तनुः ॥ १६ ॥
कालकर्मस्वभावस्थः प्रकृतिं प्रति नोदितः ।
पुरुषाधिष्ठिता देवी प्रकृतिर्गुणसङ्ग्रहा ॥ १७ ॥
महत्तत्वमभूत्तत्तत्परिज्ञानक्रियात्मकम् ।
तस्माज्जातो ह्यहङ्कारस्त्रिविधो दैवनोदितात् ॥ १८ ॥
वैकारिकस्तैजसश्च तामसश्चेति यं विदुः ।
वैकारिकान्मनोदेवा जाता ज्ञानक्रियाधिपाः ॥ १९ ॥
मरुत्केशौ दिशः सूर्यो नासत्यो ज्ञाननोदकाः ।
वह्नीन्द्रमित्रकोपेता एते कर्मापनोदकाः ॥ २० ॥
राजसाद्विषयग्राहज्ञानकर्मस्वरूपिणः ।
त्वग्रसज्ञा श्रुतिश्चक्षुर्घ्राणं बुद्धिश्च तन्मयाः ॥ २२ ॥
वाक्पाणिपायूपस्थाश्च गतिश्चेति क्रियात्मकाः ।
तामसात्पञ्चभूतानि तन्मात्राणि च भागशः ॥ २२ ॥

प्रथमं तामसाज्जज्ञे शब्दस्तस्मादभून्नभः ।
शब्दरूपात्तु नभसः स्पर्शस्तस्मादभून्मरुत् ॥ २३ ॥
मरुतोऽभूत्ततस्तेजस्तेजसो रूपमुत्तमम् ।
रूपमात्राद्रसो जज्ञे तस्मादापोऽभवन् शुचीः ॥ २४ ॥
अद्भ्यो जातो गन्धगुणो गन्धाद्भूमिरजायत ।
महत्तत्वमहङ्कारः सशब्दस्पर्शतेजसः ॥ २६ ॥
रसगन्धाविमे सर्वे स्मृता प्रकृतिविक्रियाः ।
शब्दस्य प्रकृतेरेव संदृश्यन्ते यतो बुधैः ॥ २६ ॥
अतोऽभवन् प्रकृतयो विकारान् विकृतीर्विदुः ।
आकाशे शब्दमात्रं स्याद्वायौ स्पर्शः सशब्दकः ॥२७॥
रूपं तेजसि शब्दश्च स्पर्शश्चैव जले तथा ।
रसशब्दस्पर्शरूपं पृथिव्यां सर्वमेव हि ॥ २८ ॥
कारणानां यतः कार्ये समन्वयविधिस्ततः ।
दृश्यते त्वधिकस्तत्र गुणो यावति कश्चह ॥ २९ ॥
महदादीनि तत्त्वानि पुरुषस्य महात्मनः ।
कार्यावताररूपाणि जानीहि द्विजसत्तम ॥ ३० ॥
सर्वाण्येतानि सङ्गृह्य पुरुषस्येच्छया यदा ।
अंशैरुत्पादयामासुर्विराजं भुवनात्मकम् ॥ ३१ ॥
तस्य चान्तर्गतं छिद्रं पञ्चाशत्कोटिविस्तृतम् ।
दशोत्तराधिकैरेतैः सप्तभिर्बहिरावृतम् ॥ ३२ ॥
तमाहुः पुरुषस्यैव गेहं यत्राविशत्स्वयम् ।
यतोऽचेतनमेवासीत्केवलं सर्वविस्तरम् ॥ ३३ ॥
नरादुत्पन्नतत्त्वानां सङ्घे नारसंज्ञके ।
अयनं तस्य यदभूत्तस्मान्नारायणः स्मृतः ॥ ३४ ॥
विराड्देहे यदवसद्भगवान्पुरसंज्ञके ।
अतः पुरुषनामानमवाप पुरुषः परः ॥ ३५ ॥

यदा स भगवान्देवो मूलप्रकृतिविस्तरः ।
नारायणेन रूपेण विरजमविशत्स्वयम् ॥ ३६ ॥
तदा चेतनमापाद्य चिराद्विग्रह उत्थितः ।
समष्टिशब्दतावाच्यो द्विसप्तभुवनाश्रयः ॥ ३७ ॥
यस्मिन् चराचरं भूतं स्रष्टा ब्रह्माहरेस्तनूः ।
तत्र लोकमयं यावत्तं विराजं विदो विदुः ॥ ३८ ॥
तस्याभिमानिनं जीवं वैराजं पुरुषाभिधम् ।
तदन्तर्यामिणं देवं नारायणमनामयम् ॥ ३९ ॥
सर्वजीवैकनिलयं भगवन्तं प्रचक्षते ।
अवतारसहस्राणां निधानं बीजमव्ययम् ॥ ४० ॥
यस्यांशेन रजोयुक्तः सृष्टौ ब्रह्मा व्यजायत ।
विष्णुः सत्त्वगुणाधीशः स्थितौ स्थापयितुं जगत् ॥४१॥
तमसा रुद्ररूपोऽभूत्प्रतिसञ्चरणो विभुः ।
एते विष्णोर्गुणमया अवताराः क्रियाकृताः ॥ ४२ ॥
एषामंशावतारान्मे निबोध गदतो मम ।
ब्रह्मणोंऽशेन समभून्मरीचिरत्रिरङ्गिराः ॥ ४३ ॥
पुलस्त्यः पुलहश्चैव क्रतुर्दक्षो द्विजोत्तम ।
भृगुर्वसिष्ठोऽथर्वा च कर्दमाद्याः प्रजेश्वराः ॥ ४४ ॥
एषां पुत्राश्च पौत्राश्च प्रपौत्राश्च महौजसः ।
सृष्ट्यर्थमुद्भृताः सर्वे भगवद्वीर्यसंयुताः ॥ ४५ ॥
विष्णोरंशेन समभूद्धर्मो यज्ञो बृहत्त्रिवृत् ।
स्वायम्भुवाद्या मनवो द्विसप्त लोकविश्रुताः ॥ ४६ ॥
एषां पुत्राश्च पौत्राश्च तथेन्द्राद्याश्च देवताः ।
विष्ण्वंशयुक्ता लोकानां पालकाः कथिता मया ॥४७॥
रुद्रस्यांशेन शतशो जाता रुद्रगणाः पृथक् ।
सर्पाश्च शतशो जाता ये च हिंस्राः स्वभावतः ॥४८॥

एते संक्षेपतः प्रोक्ता रुद्रस्यांशास्तमोजुषः ।
संहारिणोऽस्य जगतो घोररूपा विलक्षणाः ॥ ४९ ॥
अथ ते सम्प्रवक्ष्यामि लीलादेहान् हरेः पृथक् ।
शुद्धसत्त्वमयान् शान्तान् लोकप्रेमास्पदान् शृणु ॥५०॥
य ईश एको भगवाननन्तो ब्रह्मस्वरूपी पुरुषोऽधियज्ञः ।
पातुं पुनर्विश्वमसौ स्वकार्यं भेजे तनूस्तं प्रणमामि कृष्णम् ॥५१॥
इति श्रीसात्वततन्त्रे शिवनारदसंवादे प्रथमः पटलः ॥ १ ॥

अथ द्वितीयः पटलः ।

श्रीशिव उवाच ॥

साक्षाद्बभूव भगवान् परिपातुमीशो
वेदान् युगादिसमये हयशीर्षनामा ।
हत्वा सुरेतरवरौ मधुकैटभाख्यौ
न्यस्तश्चकार विश्रुतीः श्रुतिभिर्विमृग्यः ॥ १ ॥
लोकान्निवृत्तिपरतां प्रचिकीर्षुरादौ
भूत्वा चतुःसनतया भगवान विमुक्त्यै ।
प्रोवाच योगममलं विशदाशयेभ्यो
भोगान् विरक्तिपरतां स्वयमाचचार ॥ २ ॥
देवेषु नारदतनुर्भगवान् विशुद्धं
नैष्कर्म्ययोगमवहत्खलु पाञ्चरात्रम् ।
धर्मं तथा भगवता कथितं विशेष-
शिष्येष्वसौ परमनिर्वृतिमादधानम् ॥ ३ ॥
आदौ दधार धरणीधरणाय धातुः
स्वायम्भुवोक्तिपरिपालककाल एव ।
नारायणोऽखिलगुरुर्गुरुकोलदेहं
तेनाहनद्दितिसुतं दशनाग्रघातैः ॥ ४ ॥

भूमेरधो धरणिमण्डलमप्रमेयः
शेषाख्य आस जगतः स्थितये नितान्तम् ।
यस्मिन्कलार्पितमिदं लिखिवच्चकास्ति
नागाधिपैर्मुनिगणैः परिसेविताङ्घ्रिः ॥ ५ ॥

तस्मादधः कमठ आस विशालरूपी
ब्रह्माण्डभाण्डपरिविस्तृतादिव्यकायः ।
शेषोऽपि यत्र परिभाति सुतन्तुतुल्यो
यं चार्यमा पितृपतिः समुपासते वै ॥ ६ ॥

दृष्ट्वा दशार्द्धवयसापि विहाय मातु-
र्देहं ध्रुवं मधुवने तपसाभितप्तम् ।
भूत्वा कृपामयवपुर्भगवान्स्वलोकं
प्रादात्स्तुवन्ति यतयो मुनयोऽपि यं वै ॥ ७ ॥

आलोक्य कर्दमतपो भगवान् विभूत्यै
संशुद्धदिव्यवपुषाविरभूत् सशुक्लः ।
तस्मा अदाद्वरमजात्मजपुत्ररूप-
मानन्दबिन्दुपयसा च चकार तीर्थम् ॥ ८ ॥

यज्ञ स एव रुचिना मनुपुत्रिपुत्र
आहूतिसूतिरसुरारणिवाह्निकल्पः ।
त्रैलोक्यगोपनविधौ सुरनाथ ईश
नाम्ना सुयज्ञ इति विश्रुतकीर्तिराशिः ॥ ९ ॥

सिद्धेश्वरश्च समभूत्कपिलाख्य ईशः
श्रीदेवहूतितनयो विततान तस्यै ।
योगं स्वशक्तिसहितं चिदचिद्विभागं
साङ्ख्यं तथा स्वभि(१)मुखेषु जगाद शुद्धम् ॥१०॥

---

(१) स्वभिमुखेषु-अनुकूलेषु भक्तेष्वित्यर्थः ।

योगेश्वरोऽत्रितनयो भगवाननन्तो
दत्ताख्य आस समतावददत्स्वचर्याम् ।
प्रह्लादहैहययदुष्वपरा(१)यणेषु
शिष्येषु शिक्षितकथां कथयन् गुरुभ्यः ॥११॥
नारायणो नर ऋषिप्रवरावभूतां
धर्मस्य दक्षदुहितर्यधिमूर्तिपत्न्याम् ।
धीरोपकारकरुणाशयकायशुद्धं
तीव्रं तपः प्रचरतां सुरराजतापम् ॥ १२ ॥
नाभेरभूदृषभसंज्ञसदाप्तकामो
योगेश्वरः सुतशतैरवदत्प्रजाभ्यः ।
धर्मं ततः परमयोगिजनावचर्यं
नैष्कर्म्यलक्षणपरां स्वयमाचचार ॥ १३ ॥
धात्रन्तिके सुसनकादिभिरीर्यमाणे
चेतोगुणान् विगलितुं भगवान्स हंसः ।
प्रोवाच तत्वममलं सदयार्द्रचित्ता
यस्माद्गुणागुणविभागमभून्मुनीनाम् ॥ १४ ॥
वेने मृते द्विजजनैरनु बाहुयुग्मं
सम्मथ्यमानसमये पृथुरूप आसीत् ।
लोकक्षुधां प्रशमयन् पृथिवीं दुदोह
सर्वाणि भूतिकरणानि च सर्वभूत्यै ॥ १५ ॥
दक्षस्य यज्ञविहिते शिवशक्तिहेतोः
प्राप्ताज्यभाममधिकं भृगुणाभिदत्तम् ।
तत्राष्टबाहुरभवद्भगवान् भवाय
प्राप्ता नुतिः सुरनरादिकृतापि तेन ॥ १६ ॥
जातः प्रियव्रतकुले गय इत्युदार-
कीर्तिं ततान भगवान् तनुवाङ्मनोभिः ।

(१) अपरायणेषु-अनन्याश्रितेषु इत्यर्थः ।

तेनापि यज्ञतनुरीश्वर इन्द्ररूपी
स्पर्द्धां चकार महतां मदमादधानः ॥ १७ ॥

संवत्सरस्य तनयः स ह यामिनीना-
मालोकनादिविविधं मुदमाचिकीर्षुः ।
श्रीकामदेववपुषा ह्यवतीर्य देवो
देव्योमया मदनकेलिभिरारराम ॥ १८ ॥

प्राचीनबर्हितनयाँस्तपसा सुतप्तान्
दृष्ट्वा स्वशान्तवपुषाविरभूदनन्तः ।
दत्वा स्वपादभजनं वसतां गृहेषु
कन्यां च वृक्षजनितामदिशद्दयालुः ॥ १९ ॥

स्वारोचिषे तुषितया द्विजवेदशीर्षा-
ज्जातो विभुः सकलधर्मभृतां वरिष्ठः ।
यद्ब्रह्मचर्यनियमानृषयोऽप्यशिक्ष-
न्साक्षाज्जगद्गुरुतयावचचार शुद्धान् ॥ २० ॥

धर्मादभूत्सुततया भगवाँस्तृतीये
मन्वन्तरे त्रिजगतः स्थितये कृपालुः ।
श्रीसत्यसेन इति दुर्जनयक्षरक्षान्
यस्तानपाहरदसौ सुरनाथमित्रः ॥ २१ ॥

तुर्येऽन्तरे सरसि वारणराजराजं
ग्राहेण तीव्रबलिना परिकर्ष(१)यन्तम् ।
नारायणेत्यभिहिते हरिरुद्दधार
तस्माद्भवार्णवजलादपि देवराजः ॥ २२ ॥

वैकुण्ठ आस भगवान् द्विजवर्य मुद्रा(?)
देव्या मया तदनुरूपजयाभिधानः ।

---

(१) परिकृष्यमाणमित्यर्थे आर्षप्रयोगः ।

वैकुण्ठदर्शनमकारयदप्रमेय-
स्तस्याउ पञ्चममनोस्समये प्रसिद्धम् ॥ २३ ॥
षष्ठेऽन्तरे तु भगवान् द्विजशापखिन्न-
देहान्सुरानवनतानवलोक्य सन्नः ॥
वैराजविप्रतनयोऽजितसंज्ञ ईशो
देवासुरैरमथयत्सहसा पयोधिम् ॥ २४ ॥
देवासुरे जलनिधेर्मथनाद्विषण्णे
हस्ताच्च्युते गिरिवरे सहसार्द्रचित्तः ।
भूत्वा तु कूर्मवपुरद्भुतमुद्धधार
मेने च पर्वतविवर्त्तनगात्रकण्डूम् ॥ २५ ॥
दुग्धाम्बुधावुरुरुजां प्रचिकीर्षुरीश
आदाय पूर्णकलशं सुधया नितान्तम् ।
आयुर्विधाननिगमं खलु यज्ञभोक्ता
धन्वन्तरिः समभवद्भगवान्नराणाम् ॥ २६ ॥
धन्वन्तरे(१)रमृतपूर्णघटे स्ववारा
चूर्णीयमान (२)अमरे शरणं प्रविष्टे ।
मोहिन्यभूत्स भगवानसुरासुराणां
मोहाय तापविरमाय सदाप्तकामः ॥ २७ ॥
सत्यव्रताय जनतर्पणतः स्वरूपं
मात्स्यं महाकरुणया प्रवितत्य सद्यः ।
कल्पार्णवेऽप्यवददच्युत आत्मतत्त्वं
भूरूपनावि (३)वसते विहरन् द्विजेभ्यः ॥ २८ ॥
त्रैलोक्यदुःखदलनाय नृसिंहरूपं
कृत्वा स्वभक्तमवितुं किल लाङ्गलाग्रैः ।

(१) अस्यानन्तरमिति शेषः । (२) सन्धिरार्षः ।
(३) अस्य सत्यव्रतायेति पूर्वेणान्वयः ।

धृत्वाऽसुरेन्द्रमसुरेन्द्रविशालतीव्र-
वक्षस्थलं स्थलमिवाग्रनखैर्ददार ॥ २९ ॥

यस्मिन्प्रपश्यति बलिः सगणं त्रिलोकं
तेनापि वामनतनुं भगवान् गृहीत्वा ।
संयाच्य सम्मितपदत्रितयं बलेः स्वं
कृत्वा त्रिविष्टपमदाददितेः सुतेभ्यः ॥ ३० ॥

भक्तानहं समनुवर्त इति स्ववाचं
साक्षात्प्रकर्तुमिव भूविवरे प्रविष्टः ॥
वैरोचनेर्गृहमरक्षयदप्रमेयो
नाम्ना गदाधर इति क्षपयन् दयावान् ॥ ३१ ॥

भूत्वा तु भार्गवकुले निजताननाशा-
द्रामो महापरशुकं परिगृह्य तीक्ष्णम् ।
क्षत्रं निवार्य क्षितितलं परिहृत्य भूयो
दत्त्वा द्विजाय ह्यवसत्स महेन्द्रपृष्ठे ॥ ३२ ॥

(१)वृन्दारकैः परिनिषेवितपादपद्मः
श्रीरामचन्द्र इति सूर्यकुलाब्धिजातः ।
देवारिनाशनविधौ कुशिकान्वयेन(२)
नीतो महेशधनुराजगवं बभञ्ज ॥ ३३ ॥

ज्ञात्वा ततो भृगुकुलोद्भवधीरवीरं
रामं सुगौररुचिरां परिणीय सीताम् ।
गत्वा गृहान् गृहपतेः पितुराप्तजाया(३)-
वाचं निशम्य वनवासमगात्सभार्यः ॥ ३४ ॥

---

(१) वृन्दारकैः=देवैः ।
(२) विश्वामित्रेण ।
(३) आप्तजायावाचम्=कैकेयीवचः ।

तीर्त्वा गाङ्गपयोऽनुजानु(१)गमनाच्छ्रीचित्रकूटं गिरिं
त्यक्त्वा दुष्टविराधराधदमनो धावन् धनुर्द्धारयन् ॥
हत्वा (२)क्रूरसुरेन्द्रवैरिहरिणं मारीचसंज्ञं ततो
लङ्केशाहृतसीतया खलु पुनः प्राप्तो दशामीदृशाम् ॥ ३५ ॥
चन्द्रं चण्डकरं प्रचण्डपवनं मेने सुमन्दानिलं
मालां मालतिमल्लिकां (३)शुचिकलां गीतं स्फुलिङ्गायितम् ।
इत्येवं वनितापरायणनरं हास्यन्निवालोकयन्
ऋक्षं मन्मथसायकाहृतमनो रेमे प्रियाशङ्कया ॥ ३६ ॥
गत्वा वानरराजवालिनमहामित्रेण सेतुं ततो
बध्वा वारिधिमातरत्तरतमं साकं प्लवङ्गैर्मुदा ।
छित्वा राक्षसयक्षलक्षममला सीता (४)सपुत्रानुजं
लङ्केशं ज्वलदाशिना भगवता चाप्ता पुनः सा पुरी ॥ ३७ ॥
सूर्यादिशक्तिमविहृत्य शशास भूमिं
गोविप्रप्राज्ञपरिसेवनसर्वधर्मः ।
उद्रिक्तभक्तिनमिताननयत्स्वनाथान्
सर्वान् (५)वनाधिवसतः स्वपदं सुशान्तम् ॥ ३८ ॥
तस्यानुजो भरतसंज्ञ उदारबुद्धी
रामाज्ञया निजगृहे निवसन्नपि श्रीम् ।
त्यक्त्वा वनस्थव्रतवानभवत्ततो वै
गन्धर्वकोटिमथनं विहरँश्चकार ॥ ३९ ॥
श्रीलक्ष्मणस्तदवरो वनमेत्य रामं
सीतां निषेव्य तपसा बहुकष्ट आसीत ।

---

( १ ) अनुजस्य-भरतस्य । अनुगमनात्-आगमनात् ।
( २ ) क्रूरो यः सुरेन्द्रवैरी दशाननस्तस्य हरिणं मृगमित्यर्थः ।
( ३ ) शुचिकलाम्=वन्हिकलाम । चित्रभानुर्विभावसुः । शुचिरप्पित्तमित्यमरात् ।
( ४ ) अस्य—आप्तापदेनान्वयः । ( ५ ) वनवासिन इत्यर्थः ।

बालेऽपि चास्य वचसा वनमेत्य देहं
सन्त्यज्य तत्पदमगादरिसैन्यवह्निः ॥ ४० ॥
शत्रुघ्नसंज्ञ उरुविक्रमशुद्धबुद्धिः
शौर्येण दर्पदलनो द्विषतां दयालुः ।
दीनेषु दैत्यलवणान्तक आर्य्यसेवी
स्वान्येषु(१) साम्यमतिराजनताभिरामः ॥ ४१ ॥
मार्कण्डनाममुनये भुवनानि देष्टुं
मायालये तनुतरे जठरे मुकुन्दः ।
न्यग्रोधपत्रपुटकोषशयान आसी-
दङ्गुष्ठपानपरमः शिशुरप्रमेयः ॥ ४२ ॥
वृत्रस्य घोरवपुषा परितापितानां
संरक्षणाय भगवान् युधि निर्जराणाम् ॥
आद्यो ह्यभूद्गरुडकिन्नरगीतकीर्ति-
स्तेषां सुदुःखभयशोकविनाशशीलः ॥ ४३ ॥
अङ्गुष्ठपर्वसुमितान् श्रमणान् द्विजाग्र्यान्
दृष्ट्वा तु गोष्पदपयोगतसर्वदेहान् ।
ब्रह्मण्य इन्द्रहसितान्समिदंशुहस्तान्
गुर्व्वर्चनाय कृपयाऽऽ(२)वदमून्प्रपन्नान् ॥ ४४ ॥
दुष्यन्तबीजमधिगम्य शकुन्तलायां
जातो ह्यजोऽपि भगवानधियज्ञकर्तॄन् ।
विस्मापयन्बहुनृपान् बहुवाजिमेधान्
साक्षादियाज बहु दानमदादमेयः ॥ ४५ ॥
सर्वान् जनान्कलियुगे बलबुद्धिहीनान्
दृष्ट्वा कृपापरवशो (३)वसुवीर्यजायाम् ।

---

(१) स्वकीयेषु परेषु चेत्यर्थः ।
(२) आवत—अरक्षत् ।
(३) सत्यवत्यामित्यर्थः ।

जातः पराशरसकाशत आदिदेवो
वेदान्समाहिततया विभजिष्यति स्म ॥ ४६ ॥
वृष्णेः कुले तु भगवान् बलदेवनामा
यस्माद्बलानतिबलानदलत्सुरारीन् ।
यल्लाङ्गलाग्रकलनात् कुरुराजधानी
धानेव(१) धामसहिता(२) चलितातिभीता ॥४७॥
भूमेर्जनस्य निजपादपरायणस्य
(३)वृष्णेरजोऽपि भगवान् सुखपादधानः ।
जातो भविष्यति यशो विपुलं प्रकर्तुं
श्रीकृष्ण इत्यभिहितोऽखिलशक्तिपूर्णः ॥ ४८ ॥
जातो निजेन वपुषा वसुदेवगेहे
गत्वा तु गोकुलमथो विहरन् विनोदैः ।
बालाकृतिर्विशदबालकभाषहासै-
र्गोगोपगोपवनितामुदमाशु कर्ता ॥ ४९ ॥
कंसानुशिष्टसुरशत्रुगणानुलूकी(४)-
मुख्यान् हनिष्यति व्रजस्थितये महाद्रिम् ।
धृत्वोच्छिलीन्ध्रमिव सप्त दिनानि वाम-
हस्ते प्रगृह्य सुरनाथमदं प्रमार्ष्टा ॥ ५० ॥
धात्रा यदा सपशुगोपशिशौ प्रणीते
बुद्धेर्भ्रमो हलभृतोऽभवदप्रमेयः ॥
तत्संहरन् सपशुपालकुलस्वरूपं
कृत्वा विधिं विविधमोहमलात्स धर्ता(५) ॥ ५१ ॥

---

(१) भृष्टयववत् इत्यर्थः। "अक्षतास्तु यवाः प्रोक्ता भृष्टा धाना भवन्ति ते" इत्युक्तेः।

(२) गृहसहितेत्यर्थः। "धामरश्मौगृहे" इतिकोशात्।

(३) अस्य जात इत्युत्तरार्धगतेनान्वयः। वृष्णिकुलाज्जात इत्यर्थः।

(४) उलूकीमुख्यान्-पूतनाप्रभृतीन्। (५) धर्ता-उद्धरिष्यतीत्यर्थः।

वृन्दावने सुरभिवाद्यविलासगीतै-
गोंधुग्वधूजनमनोजजवं दधानः ॥
कर्ता महामदनकेलिविहारगोष्ठी-
विस्मापनं निशि निशाचरखेचराणाम् ॥ ५२ ॥
कंसस्य रङ्गसदनं सबले प्रणीते
स्वा(१)फल्किना भवधनुस्तरसा विभज्य ।
चाणूरशूरशमनं सहकंसमाजौ
कर्ता द्विपं कुवलयं सहसा निहत्य ॥ ५३ ॥
सान्दीपनं मृतसुतं गुरुदक्षिणार्थी
दत्त्वा जरासुतबलं यवनं च हत्वा ॥
श्रीरुक्मिणीप्रभृतिदारशतं विवाह्य
ताभ्यः सुतान् दशदशानु जनिष्यति स्म ॥५४॥
भौमं निहत्य सगणं दिवि देवमातु-
र्दातुं तदीयमणिकुण्डलमादिदेवः ॥
गत्वा सुरेन्द्रतरुराजवरं प्रियायाः
प्रीतौ समुद्धरणतो दितिजान्स जेता ॥ ५५ ॥
बाणासुरस्य समरे मम वीर्यनाशा-
ल्लब्धामरत्वमाधिकं युधि भूपबन्धून् ॥
जित्वा युधिष्ठिरनृपक्रतुना विवाह-
बीजं नि(२)पात्य गुरुभारतरं प्रहर्ता ॥ ५६ ॥
लोके प्रदर्श्य सुतरां द्विजदेवपूजां
स्वस्याप्यपारकरुणां निजसेवकेभ्यः ॥
त्रात्वा परीक्षितनृपं परमास्त्रदग्धं
पार्थाय भूतिमवलोकयिता द्विजार्थे ॥ ५७ ॥

(१) अक्रूरेण ।
(२) निपात्य—सम्पाद्येत्यर्थः । धातूनामनेकार्थत्वात् ।

कामेन स्नेहभयरागकुटुम्बसन्धे
यस्मिन्मनो निवसतः शमलं निरस्य
दाता स्वरूपममलं परिशुद्धभावः
साक्षात्स्वरूपनिरतस्य च किन्नु वक्ष्ये ॥ ५८ ॥
यत्पादपङ्कजपरागपरायणाना-
मग्रे चकास्ति न च मुक्तिसुखं नितान्तम् ॥
किं वान्यदर्पितभयं खलु कालवेगैः
साक्षान्महासुखसमुद्रगतान्तराणाम् ॥ ५९ ॥
गङ्गादितीर्थतपहोमव्रतादिकेभ्यः
कीर्तिं स्वकी(१)यमधिकां समुदीर्य लोके ॥
अत्युन्नतं द्विजकुलं (२)द्विजशापव्याजा-
द्धत्वा स्वलोकममलं तनुनाभिगन्ता ॥ ६० ॥
तस्माद्भविष्यति सुतः सुखदो जनानां
प्रद्युम्नसञ्ज्ञ उरु(३)गायगुणानुरूपः ॥ ६१ ॥
कर्ता मुदं मुदितवक्त्रसुचारुगात्रैः
पात्रैरिवामृतपयो मनुजान्प्रच्छन् ॥
तत्राप्यजोऽनुजनिताप्यनिरुद्धनामा-
नाम्नां प्रवर्तकतया मनसीश्वरोऽपि ॥ ६२ ॥
यस्मादुषाऽऽहरणतो भुजवीर्यनाशा-
द्बाणो भविष्यति शिवानुगशान्तदेहः ॥
व्यासाद्भविष्यति०० भगवानरण्यां
योगी जनान्प्रति गदिष्यति वेदसारम् ॥ ६३ ॥
श्रीमत्सुशान्तममलं भगवत्प्रणीतं
यच्छ्रद्धया कलिजना अपि यान्ति शान्तिम् ॥

---

(१) अस्य द्विजकुलपदेनान्वयः । (२) द्विजकुलम्-यादवकुलमित्यर्थः।
(३) उरुगायो-भगवान् श्रीकृष्णः ।

बुद्धावतारमधिगम्य कलावलक्षै-
वेषैर्मतेरतिविमोहकरं प्रलोभम् ॥ ६४ ॥
पाखण्डशास्त्रमधिकल्प्य सुराद्विषाणां
कर्ता जिनस्य तनयो भगवान्गयायाम् ॥
पाखण्डशास्त्रबहुले निजवेदमार्गे
नष्टे द्विजातिभिरसत्पथि वर्तमाने ॥ ६५ ॥
कल्क्यावतारतरणिस्तरुणान्धकार-
तुल्यं तुदन्नृपगणं कृतधर्मगोप्ता ॥
साक्षाद्भविष्यति सरस्वतिसंज्ञितायां
श्रीसार्वभौम इति वेदगुपो द्विजाग्र्यात् ॥६६॥
कृत्वा पुरन्दरश्रियं बलयेऽतिदास्यन् ।
गोप्ताष्टमे मनुयुगे विदितानुभावः ॥
आयुः करो नवमनोः समये जनानां
नीतिं विधातुममरारिविनाशनाय ॥ ६७ ॥
गोप्ता भविष्यति जगज्जनधारयासौ
भूत्वा श्रुतेन्द्रसहितो भगवानपारः ॥
भूत्वा विशूचिसदने द्विजराजशम्भोः
साहित्यकर्मपरवान् दशमेऽन्तरे सः ॥ ६८ ॥
पाताऽमरान्००० विश्वक्० सेनसंज्ञो
यत्सैन्यपूगसमरादमरारिनाशः ॥
मन्वन्तरैक(१)दशमेऽर्थकरिप्रपौत्रः
श्रीधर्मसेतुरिति विश्रुत आदिदेवः ॥ ६९ ॥
हत्वाऽसुरान् सुरपतौ विधृतेरपत्ये
दाता तृती(२)यभवनं भगवान्स्वयम्भुः ॥

---

(१) एकाधिको दशम एकदशमः । एकादश इत्यर्थः ।
(२) स्वर्गमित्यर्थः ।

जातो द्वि(१)षण्मनुयुगे युगपालनाय
विप्रात्स्वशक्तिमहसः सुनृताख्यतो वै ॥ ७० ॥
ख्यातो भविष्यति ततो भगवान्स्वधामा
यस्माज्जना जगति सौख्यमपारमापुः
भाव्ये त्रयोदशयुगे भविताऽऽदिदेवः
श्रीदेवहोत्रतनयो भगवान्बृहत्याम् ॥ ७१ ॥
योगेश्वरो दिवि दिवस्पतिशक्रमित्रो
योगादमेयवपुषा स वितान(२)तुल्यः ॥
सत्रायणस्य सदने भगवाननादि-
देवोऽपि देववनितातनयोऽभिजातः ॥ ७२ ॥
अन्तेऽन्तरे करणकर्मवितानतन्तून्
विस्तारयिष्यति जगद्धितकामशीलः ॥
एते मया भगवतः कथिता द्विजाते
शुद्धावतारनिचया जगतो हितार्थाः ॥
सम्पूर्णतांशकलया परिभावनीया
ज्ञानक्रियाबलसमादिभिराभिव्यक्ताः ॥ ७३ ॥
यल्लीलातनुभिर्नित्यं पाल्यते सचराचरम् ॥
तमहं शरणं यामि कृष्णं ब्रह्माण्डनायकम् ॥ ७४ ॥

इति श्रीसात्त्वततन्त्रे द्वितीयः पटलः ॥

---

अथ तृतीय पटलः ।

श्रीनारद उवाच ।

कथिता भगवान्विष्णोरवतारा महात्मनः ॥
सम्पूर्णांशकलाभेदैर्भावनीयास्त्वया प्रभो ॥ १ ॥

---

(१) द्विषण्मनुयुगे--द्वादशमन्वन्तरे इत्यर्थः ।
(२) वितानं—क्रतुः ।

निर्विकल्पस्य कृष्णस्य ब्रह्मणः परमात्मनः ।
कथमंशकलाभाग एतद्वर्णय नो विभो ॥ २ ॥

श्रीशिव उवाच ।

सत्यमुक्तं त्वया ब्रह्मन् कृष्णस्य जगदात्मनः ।
अवतारेषु सर्वेषु भेदादंशकलाः स्वतः ॥ ३ ॥
न वर्णयन्ति निपुणा ज्ञानिनो भगवत्पराः ।
अविकारादच्युताच्च निर्भेदाद्ब्रह्मरूपिणः ॥ ४ ॥
किन्तु ज्ञानप्रभावादेः पूर्णांशांशानुदर्शनात् ।
पूर्णमंशकलाभागं वदन्ति जगदीशितुः ॥ ५ ॥
सन्ति यद्यपि सर्वत्र ज्ञानवीर्यगुणादयः ।
तथापि कार्यतः केचिद्दृश्यन्ते नहि सर्वतः ॥ ६ ॥
ऐश्वर्यज्ञानधर्माश्च वैराग्यं श्रीर्यशस्तथा ।
एषां सन्दर्शनात्साक्षात्पूर्णो विद्वाद्भिरुच्यते ॥ ७ ॥
एतेषामपि भागानामल्पाल्पदर्शनादसौ ।
विभांसंशकलाभेदो भगवान्भगभेदधृक् ॥ ८ ॥
अंशस्तुरीयो भागः स्यात्कला तु षोडशी मता ।
शतभागो विभूतिश्च वर्ण्यते कविभिः पृथक् ॥ ९ ॥
अतो ज्ञानस्य धर्मस्य वैराग्यैश्वर्ययोः श्रियः ।
यशसः पृथग्भेदं मत्तः शृणु द्विजोत्तम ॥ १० ॥
उत्पत्तिप्रलयौ चैव विद्याविद्ये (१)गताऽगती ।
एषां ज्ञानं वदन्त्यङ्ग ज्ञानं षड्विधमुत्तमम् ॥ ११ ॥
सत्यं शौचं दया मौनं धर्मश्चातुर्विधः(२) स्मृतः ।
अमानो व्यतिरेकश्च ऐन्द्रियस्तु वशीकृतः ॥ १२ ॥

---

( १ ) गतं गतिरित्यर्थः ।
( २ ) चतुर्विध एव चातुर्विध इति स्वार्थेऽण् बोध्यः ।

एवं चतुर्विधो भद्र वैराग्यस्समुदाहृतः।
अणिमा लघिमा चैव महिमा तदनन्तरम् ॥ १३ ॥
प्राकाम्यं चैव प्राप्तिश्च ईशिता वशिता तथा।
कामस्यावसिता ह्येते अष्टैश्वर्याः(१) प्रकीर्तिताः ॥१४॥
भृत्यामात्यसुहृद्बन्धुपुत्रपौत्रकलत्रकाः।
वासोभूषणकोषाश्च सैनिका चतुरङ्गिणी ॥ १५ ॥
गृहा भूरस्त्रशस्त्रे च दुर्गाद्याः श्रिय ईरिताः।
यशस्तु पुंसो भवति कर्मतो गुणतस्तथा ॥ १६ ॥
कर्म चतुर्विधं प्रोक्तं सृष्टिस्थितिलयात्मकम्।
तथा लीलावताराणां चरितं परमाद्भुतम् ॥ १७ ॥
गुणान्यपरिमेयाणि कीर्तितानि मनीषिभिः।
तथाप्यहं द्विषष्टीं ते वर्णयाम्यनुपूर्वशः ॥ १८ ॥
ब्रह्मण्यश्च शरण्यश्च भक्तवात्सल्यमेव च।
दातृत्वं सत्यसन्धत्त्वं विक्रान्तत्त्वं नियम्यता ॥ १९ ॥
दुर्जयत्वं दुस्सरत्वं निषेव्यत्वं सहिष्णुता।
अक्षोभ्यत्वं स्वतन्त्रत्त्वं नैरपेक्ष्यं स्वसौष्ठवम् ॥ २० ॥
शौर्यमौदार्यमास्तिक्यं स्थैर्यं धैर्यं प्रसन्नता।
गाम्भीर्यं प्रश्रयः शीलं प्रागल्भ्यमृतमङ्गलम् ॥ २१ ॥
शमो दमो बलं दाक्ष्यं क्षेमं हर्षोऽनहङ्कृतिः।
सन्तोष आर्जवं साम्यं मनोभाग्यं श्रुतं सुखम् ॥ २२ ॥
त्यागो भयं पावनं च तेजः कौशलमाश्रयः।
धृतिः क्षमा स्मृतिर्लज्जा श्रद्धा मैत्री दयोन्नतिः ॥ २३ ॥
शान्तिः पुष्टिः स्ववाक् शुद्धिर्बुद्धिर्विद्या स्वरक्षता।
एते ते भगभेदास्तु कथिता ह्यनुपूर्वशः ॥ २४ ॥

---

(१) आर्षी पुँल्लिङ्गता।

एषां प्रकाशो यत्रासीत्स पूर्णः परिकीर्तितः ।
अंशप्रकाशादंशः स्यात्कलायास्तु कला स्मृता ॥२५॥
विभूतेस्तु विभूतिः स्यादेष भेदो न हि स्वतः ।
निर्विकल्पस्य सत्यस्य परब्रह्मस्वरूपिणः ॥ २६ ॥
नारायणस्य शुद्धस्य श्रीकृष्णस्य महात्मनः ।
यतः कृष्णावतारेण भगभेदाः पृथक् पृथक् ॥ २७ ॥
सन्दर्शिताः पृथक्कार्ये तस्मात्सम्पूर्ण उच्यते ।
हयग्रीवाद्यवतारे तस्मादल्पतरा यतः ॥ २८ ॥
दर्शिता भगभेदा वै तस्मादंशाः प्रकीर्तिताः ।
यतो रामो मत्स्यकूर्मवराहा नरकेशरी ॥ २९ ॥
मन्वन्तरावताराश्च यज्ञाद्या हयशीर्षवान् ।
तथा शुक्लादयो ह्याविर्भावा ऋषभ आत्मवान् ॥ ३० ॥
नरनारायणो दत्तः कलौ च बुद्धकल्किनौ ।
ज्ञानकर्मप्रभावाद्यैरंशा विष्णोः प्रकीर्तिताः ॥ ३१ ॥
कुमारनारदव्यासा ब्रह्मरातादयः कलाः ।
ज्ञानांशयुक्ताः श्रीविष्णोरवतारा महात्मनः ॥ ३२ ॥
गयः पृथुश्च भरतः शक्तियुक्ताः कला मताः ।
गुणावतारा ब्रह्माद्यास्तदंशा ये विभूतयः ॥ ३३ ॥
एषा मया ते कथिता सम्पूर्णांशकलाभिदा ।
कार्यानुरूपा विप्रेन्द्र भगभेदप्रदर्शनात् ॥ ३४ ॥
न ब्रह्मणो भिदा विप्र श्रीकृष्णस्य च सत्तम ।
नारायणस्य वा सौम्य ह्यवतारिस्वरूपिणः ॥ ३५॥

श्रीनारद उवाच ।

अवतारिस्वरूपं मे वर्णयस्व सदाशिव ।
किं ब्रह्म परमं साक्षात्किं वा नारायणो विभुः ॥ ३६ ॥

किं वा वैकुण्ठलोकेशः श्रीकृष्णः पुरुषोत्तमः ।
किमेकतत्वमेतेषामथवा किं पृथक् पृथक् ॥ ३७ ॥

श्रीशिव उवाच ॥

शृणु तत्परमं गुह्यं ब्रह्मदायाद सत्तम ।
अवतारिस्वरूपं मे यथावर्णयतो द्विज ॥ ३८ ॥
एकमेव परं तत्वमवतारि सनातनम् ।
श्रीकृष्णब्रह्मपुरुषैः संज्ञाभिर्दीयते पृथक् ॥ ३९ ॥
यथा भानोः प्रकाशस्य मण्डलस्यापृथक्स्थितिः ।
तथा श्रीकृष्णदेवस्य ब्रह्मणः पुरुषस्य च ॥ ४० ॥
अतः सात्वततन्त्रज्ञा भक्तिनिष्ठा विलक्षणाः ।
श्रीकृष्णाख्यं परं धाम परमानन्दमुत्तमम् ॥ ४१ ॥
वैकुण्ठलोकनिलयं शुद्धसत्वात्मविग्रहम् ।
वदन्ति शाश्वतं सत्यं स्वभक्तगणसेवितम् ॥ ४२ ॥
वेदान्तिनो ज्ञाननिष्ठा ज्ञानशास्त्रानुसारतः ।
वदन्ति ब्रह्म परमं प्रकाशात्मकमव्ययम् ॥ ४३ ॥
अपाणिपादनयनश्रोत्रत्वग्घ्राणविग्रहम् ।
सर्वशक्तियुतं तेजोमयं (१)वाङ्मनसापदम् ॥ ४४ ॥
आनन्दमात्रं संशुद्धं चिद्व्यक्तं सर्वकारणम् ।
हैरण्य(२)गर्भास्त्रैविद्या नारायणमनामयम् ॥ ४५ ॥
सहस्रशिरसं देवं परमानन्दमव्ययम् ।
अनन्तशक्तिं सर्वेषां पुरुषं प्रकृतेः परम् ॥ ४६ ॥
वदन्ति कर्मपरमाः स्थित्युत्पत्त्यन्तभावनम् ।
सर्वानन्दकरं शान्तं संसारार्णवतारकम् ॥ ४७ ॥
अतः कृष्णस्य देवस्य ब्रह्मणः पुरुषस्य च ।

---

(१) वाङ्मनसागोचरमित्यर्थः ।
(२) अनयोः 'वदन्ति' इति द्वितीयश्लोकगतेनान्वयः ।

वस्तुतो नैव भेदो हि वर्ण्यते तैरपि द्विज ॥ ४८ ॥
यथार्थो बहुधा भाति (१)नानाकरणवृत्तिभिः ।
तथा स भगवान्कृष्णो नानेव परिचक्षते ॥ ४९ ॥
अतः सर्वमेतनापि श्रीकृष्णः पुरुषोत्तमः ।
लीलामानुषरूपेण देवकीजठरं गतः ॥ ५० ॥
अतः सर्वावताराणां कारणं कृष्ण उच्यते ।
सृष्ट्याद्यनेककार्याणि दर्शितानि यतः स्वतः ॥ ५१ ॥
स एव सर्वलोकानामाराध्यः पुरुषोत्तमः ।
मुक्त्याद्यर्थं नृलोकस्य मानुषत्वं यतो गतः ॥ ५२ ॥
अतस्तं पुरुषा नित्यं भक्तिभेदेन नित्यदा ।
भजन्ति ह्यपवर्गेशं परेशं तदकाम्यया ॥ ५३ ॥
मया ते कथिता विप्र अवतारा महात्मनः ।
किमन्यत्कथयाम्यद्य त्वं हि भागवतोत्तमः ॥ ५४ ॥

इति श्रीसात्वततन्त्रे तृतीयः पटलः ।

---

## चतुर्थः पटलः ।

श्रीनारद उवाच ।

नास्ति तृप्तिः शृण्वतो मे तव वागमृतं हरेः ।
यशः परमकल्याणमवतारकथाश्रयम् ॥ १ ॥
तथापि साम्प्रतं ह्येतच्छ्रुत्वा कौतूहलं मम ।
भक्तिभेदं भगवतो भावनीयं सदा नृभिः ॥ २ ॥
ब्रूहि मे भगवन् विष्णोर्भक्तिभेदं सदाशिव ।
यज्ज्ञात्वा ह्यञ्जसा विष्णोः साम्यं याति जनः प्रभो॥३॥

---

(१) इन्द्रियवृत्तिभिरित्यर्थः ।

श्रीशिव उवाच ।

साधु पृष्टं त्वया साधो परं गुह्यतमं यतः ।
अन्यस्मै न मया प्रोक्तं विना भागवतान्नरात् ॥ ४ ॥
यदैवावोचं मां कृष्णो ध्यानात्तुष्टमना विभुः ।
तदैवाहं निषिद्धोऽस्मि अभक्तोक्तौ कृपालुना ॥ ५ ॥
तदा चाहं तस्य पादपङ्कजे शिरसा नतः ।
ब(१)भाष एतद्भगवान् भक्तान्निर्देष्टुमर्हसि ॥ ६ ॥
तदा प्रीतमना देवो मामुवाच सतां गतिः ।
शृणुष्व शिव भद्रं ते भक्तान् वक्ष्यामि सात्वतान् ॥ ७ ॥
मद्ध्याननिष्ठान्मत्प्राणान्मद्यशःश्रवणोत्सुकान् ।
भक्तान् जानीहि मे देव सर्वलोकप्रणामकान् ॥ ८ ॥
तेभ्यः परमसन्तुष्टो भक्तिभेदंससाधनम् ।
ब्रवीमि शिव ते भक्तिस्तेनैव सम्प्रसिद्ध्यति ॥ ९ ॥
यदि त्वद्वाक्यनिष्ठः स्याद्योऽपि कोऽपि सदाशिव ।
तस्मै प्रीतमना वाच्यो भक्तिभेदः ससाधनः ॥ १० ॥
तदिदं ते प्रवक्ष्यामि भक्तिभेदं ससाधनम् ।
यतो भागवतश्रेष्ठो भगवत्कीर्तनप्रियः ॥ ११ ॥
एकैव भक्तिः श्रीविष्णोः प्रीतिरित्युच्यते बुधैः ।
निर्गुणत्वादखण्डत्वादानन्दत्वाद्द्विजोत्तम ॥ १२ ॥
किन्तु ज्ञानक्रियालीलाभेदैः सा त्रिविधा मता ।
तान् शृणुष्वानुपूर्व्येण मत्तः स्वावहितो द्विज ॥ १३ ॥
सर्वान्तर्यामिणि हरौ मनोगतिरविच्युता ।
सा निर्गुणज्ञानमयी साक्षादपि गरीयसी ॥ १४ ॥
सर्वेन्द्रियाणां सर्वेशे विष्णौ गतिरनुत्तमा ।
स्वाभाविकी भागवती कर्मजा मुक्तिहेलिनी ॥ १५ ॥

(१) अहमेतद्बभाषे इत्यन्वयः । बभाषे इत्युत्तमपुरुषैकवचनम् ।

हरिलीलाश्रुतोच्चारे जाता प्रेममयी तु या ।
सत्सङ्गजान्यासाद्भाद्या सर्वदा साध्वनुत्तमा ॥ १६ ॥
तासां साधनसामग्रीं क्रमतः शृणु सत्तम ।
यामाश्रित्य समाप्नोति जनो भक्तिं जनार्दने ॥ १७ ॥
स्वानुरूपस्वधर्मेण वासुदेवार्पणेन च ।
हिंसारहितयोगेन भगवत्प्रतिमादिषु ॥ १८ ॥
श्रुतिदृष्टिस्पर्शपूजास्तुतिप्रत्यभिनन्दनैः ।
विषयाणां विरागेण स्वगुरोः परिचर्यया ॥ १९ ॥
निवृत्तिशास्त्रश्रवणैरुत्तमेषु क्षमादिभिः ।
समेषु मित्रभावेन दीनेषु दयया तथा ॥ २० ॥
भगवन्मूर्त्यभिध्यानैर्यशसां श्रुतिकीर्तनात् ।
भूतेषु भगवद्दृष्ट्या निर्गुणा भक्तिरुच्यते ॥ २१ ॥
लब्ध्वा तां निर्गुणां भक्तिं मुक्तिं चापि न मन्यते ।
मुक्तिः सैवेत्यभिहिता भगवद्भावकारिणी ॥ २२ ॥
अथ भाग(१)वतीभक्तेः साधनं शृणु सत्तम ।
यत्सर्वयत्नतः कार्यं पुरुषेण मनीषिणा ॥ २३ ॥
श्रीगुरोरुपदेशेन भगवद्भक्तितत्परैः ।
यथाकार्यं स्वकरणैर्भगवत्पादसेवनम् ॥ २४ ॥
वाचोच्चारोहरेर्नाम्नां कर्णाभ्यां कर्मणां श्रुतिः ।
हस्ताभ्यां भगवद्देहप्रतिमादिषु सेवनम् ॥ २५ ॥
जिह्वया भगवद्दत्तनैवेद्यहरणं मुदा ।
नासया कृष्णपादाब्जलग्नगन्धानुजिघ्रणम् ॥ २६ ॥
भगवद्गात्रनिर्माल्य हरणं शिरसा तथा ।
दृष्ट्वा विष्णुजनादीनामीक्षणं सादरेण च ॥ २७ ॥

(१) आर्षः पुंवद्भावाभावः ।

मनसा भगवद्रूपचिन्तनं शिरसोरसा ।
बाहुपादादिभिर्विष्णोर्वन्दनं परया मुदा ॥ २८ ॥
अर्थादीनामानयनमीश्वरार्थेन सर्वशः ।
एतैः स्वसाधनैर्नित्यं भगवत्पादसेवनम् ॥ २९ ॥
आशु सम्पद्यते भक्तिः कृष्णे भागवती सती ।
यदेन्द्रियाणां सर्वेषां कृष्णे परमपूरुषे ॥ ३० ॥
स्वाभाविकी रतिरभूत्सा वै भागवती मता ।
एतद्भक्तिपरो विप्र चातुर्वर्ग्यं न मन्यते ॥ ३१ ॥
तस्यामन्तः सर्वसुखमधिकं वापि लभ्यते ।
अथ प्रेममयीभक्तेः कारणं द्विजसत्तम ॥ ३२ ॥
शृणु विश्वासमापन्नो निश्चयात्मिकया धिया ।
सद्गुरोरुपदेशेन लब्ध्वा सत्सङ्गमादृतः ॥ ३३ ॥
चतुर्विधानां श्रीविष्णोः कर्मणां श्रवणं सताम् ।
तेष्वेवं कीर्तनं तेषां मनसा चापि चिन्तनम् ॥ ३४ ॥
वचसा ग्रहणं तेषां तत्पराणां प्रशंसनम् ।
यद्यशक्तो भवेत्कीर्तौ स्मरणे चापि सर्वशः ॥ ३५ ॥
तदा तु भगवन्नाम्नामावृत्तौ (त्तिं) वृत्त ( वर ) येत्सदा ।
सदा शश्वत्प्रीतियुक्तो यः कुर्यादेतदन्वहम् ॥ ३६ ॥
तस्याशु भक्तिः श्रीकृष्णे जायते सद्भिरादृता ।
एवं प्रेममयीं लब्ध्वा भित्त्वा संसारमात्मनः ॥ ३७ ॥
आशु सम्पद्यते शान्तिं परमानन्ददायिनीम् ।
लब्ध्वापि भक्त्या भगवद्रूपशीलगुणक्रियाः ॥ ३८ ॥
नानुसन्धत्त एता वै विना भक्तिं जनार्दने ।
यद्यन्यसाधनान्यन्यभक्तौ कुर्यादतन्त्रितः ॥ ३९ ॥
न तत्र कश्चिद्दोषः स्याद्धरिसेवा यतः कृता ।
किन्तु यद्भक्तिनिष्ठा स्यात्तामेवाप्नोति मानवः ॥ ४० ॥

फलभेदेन भेदः स्यात्साधनेन न भिद्यते ।
पृथगेव मयाऽऽख्यातो भक्तिभेदः ससाधनः ॥ ४१ ॥
निष्कामः फलरूपश्च नित्यो मोक्षसुखाधिकः ।
सकामः सगुणो विप्र बहुधोक्तो महर्षिभिः ॥ ४२ ॥
किं भूयः कथयाम्यद्य वद मां द्विजसत्तम ॥

श्री नारद उवाच ॥

विधेयं कथितं सर्वं त्वया मे सुरसत्तम ।
निषेधनीयं किं चात्र भक्तिस्तम्भकरं च यत् ॥ ४३ ॥
हानिवृद्धिकरं चापि मुख्यसाधनमेव च ।
कथयस्व महादेव श्रद्धासेवापराय मे ॥४४॥

श्रीशिव उवाच ॥

भक्तीनां साधनानां यद्बहिर्भूतं महामुने ।
निषेधनीयं तत्तासां भक्तानां पुरुषोत्तमे ॥ ४५ ॥
देहप्रवाहादाधिक्यं विषयादरणं च यत् ।
भक्तिस्तम्भकरं प्रोक्तं भक्तिनिष्ठे द्विजोत्तम ॥ ४६ ॥
समासेन(१) मया प्रोक्तं निषेधस्तम्भनं(२) तव ।
भक्तिघ्नदोषं शृणु तं सर्वथा वर्जनं नृणाम् ॥ ४७ ॥
निर्गुणायां प्राणिहिंसा भागवत्यामहङ्कृतिः ।
प्रेममय्यां सतां द्वेषो भक्तिनाशकरा इमे ॥ ४८ ॥
सर्वभक्तिव्यतिकरः(३) स्वगुरोर्वागनादरः ।
द्वेषेण नरकं याति कुर्वन् भक्तिमपि द्विजः ॥ ४९ ॥
दोषदृष्ट्या दोषवान् स्यात्तत्र दोषफलं भवेत् ।
मर्त्यदृष्ट्या कृतं सर्वं भवेत्कुञ्जरशौचवत् ॥ ५० ॥

(१) समासेन=सङ्क्षेपेणेत्यर्थः ।
(२) निषेधरूपस्तम्भनमित्यर्थः ।
(३) व्यतिकरः—नाशकः ।

सर्वसाधनमुख्या हि गुरुसेवा सदादृता ।
यया भक्तिर्भगवति ह्यञ्जसा स्यात्सुखावहा ॥ ५१ ॥
तस्मात्सर्वप्रयत्नेन गुरोर्वागादरेण वै ।
कार्या सैव तु तत्सर्वा भगवद्भक्तिवर्द्धिनी ॥ ५२ ॥
निर्गुणा(१) भक्तिनिष्ठेन कार्या भूतदया सदा ।
भागवत्यां कायमनोवचसां परिनिष्ठिता ॥ ५३ ॥
प्रेममय्यां सतां प्रीत्या श्रवणं यशसां हरेः ।
मुख्याः साधनसम्पत्तयः कथितास्ते द्विजोत्तम ॥ ५४ ॥
सर्वमूलं कृष्णपादशरणं परिकीर्तितम् ।
यद्विना स्रवते भक्तिरामभाण्डात्पयो यथा ॥ ५५ ॥

श्रीनारद उवाच ॥

कृष्णपादाब्जशरणं वद मे बहुवित्तम ।
विना येन पुमान्न याति कुर्वन् भक्तिमपि श्रमम् ॥ ५६ ॥

श्रीशिव उवाच ॥

कायवाङ्मनसां साक्षात्कृष्णे परमपूरुषे ।
परिनिष्ठाऽऽश्रयं यद्वै शरणं परिकीर्तितम् ॥ ५७ ॥
एतद्वै त्रिविधं प्रोक्तं वेदविद्भिर्द्विजोत्तम ।
प्रथमं मध्यमं श्रेष्ठं क्रमशः शृणु तन्मुने ॥ ५८ ॥
धर्मे तीर्थे च देवादौ रक्षकत्वमघादितः ।
यद्बुद्धिनिष्ठितं कृष्णे कृतं तत्प्रथमं स्मृतम् ॥ ५९ ॥
कलत्रपुत्रमित्रेषु धने गेहगवादिषु ।
यन्ममत्वाश्रयं कृष्णे कृतं तन्मध्यमं स्मृतम् ॥ ६० ॥
देहादावात्मनो यावदात्मत्वाश्रयणादि यत् ।
तत्सर्वं कृष्णपादाब्जे कृतं श्रेष्ठं प्रकीर्तितम् ॥ ६१ ॥

---

(१) उपरितनश्लोकस्थकार्येत्यनेनान्वेति ।

ईश्वरं तदधीनं च तद्धर्मं च सनातनम् ।
हित्वान्यदाश्रयं तस्य वस्तुतो नैव दृश्यते ॥ ६२ ॥
एतच्छरणसम्पन्नो भक्तिमान्पुरुषोत्तमे ।
पुनाति सर्वभुवनं हृदिस्थेनाच्युतेन सः ॥ ६३ ॥
तस्माद्भक्तादृतेर्विष्णोर्देहोऽपि नैव सत्प्रियः ।
किमुतान्ये विभूताद्याः परमानन्दरूपिणः ॥ ६४ ॥

श्रीनारद उवाच ॥

भक्तानां लक्षणं साक्षाद्ब्रूहि मे सुरसत्तम ।
तथैव तेष्वहं प्रीतिं करिष्यामि समाहितः ॥ ६५ ॥

श्रीशिव उवाच ॥

भक्तानां लक्षणं साक्षाद्दुर्विज्ञेयं नृभिर्मुने ।
वैष्णवैरेव तद्वेद्यं पदान्यहिरहेरिव ॥ ६६ ॥
तथापि सारतस्तेषां लक्षणं यदलौकिकम् ।
वक्ष्ये तत्ते मुनिश्रेष्ठ विष्णुभक्तो यतो भवान् ॥ ६७ ॥
मच्चित्ता निरहङ्कारा ममकारविवर्जिताः ।
शास्त्रानुवर्तिनः शान्ताः सुहृदः सर्वदेहिनाम् ॥ ६८ ॥
यदा सर्वेषु भूतेषु हिंसन्तमपि कञ्चन ।
न हिंसन्ति तदा मुक्ता निर्गुणा भगवत्पराः ॥ ६९ ॥
हरिसेवां विना किञ्चिन्मन्यन्ते नात्मनः प्रियम् ।
वासुदेवपरा देहगेह इन्द्रियवृत्तयः ॥ ७० ॥
रागद्वेषादिरहिता मानामानविवर्जिताः ।
सदा सन्तुष्टमनसो भक्ता भागवता मताः ॥ ७१ ॥
सत्प्रीतिपरमाः शुद्धाः श्रुतिकीर्त्युक्तिनिष्ठिताः ।
त्रैवर्गिकपराऽऽलापस्नेहसङ्गविवर्जिताः ॥ ७२ ॥
सद्वाक्यकारिणः कृष्णयशस्युत्सुकमानसाः ।

हरिप्रीतिपरा एते भक्ता लोकप्रणामकाः ॥ ७३ ॥
भक्तानां लक्षणं ह्येतत्सामान्येन निरूपितम् ।
इदानीमात्मजिज्ञास्यं लक्षणं त्रिविधं शृणु ॥ ७४ ॥
सर्वात्मानं हरिं ज्ञात्वा सर्वेषु प्रीतिमान्नरः ।
सेवापरो द्वेषहीनो जनेषु स च सत्तमः ॥ ७५ ॥
ज्ञात्वापि सर्वगं विष्णुं तारतम्येन प्रीतिमान् ।
श्रेष्ठमध्यमनीचेषु ह्यात्मनः स तु मध्यमः ॥ ७६ ॥
प्रतिमादिष्वेव हरौ प्रीतिमान्न तु सर्वगे ।
प्राणिप्राणवधत्यागी प्राकृतः स तु वैष्णवः ॥ ७७ ॥
यस्येन्द्रियाणां सर्वेषां हरौ स्वाभाविकी रतिः ।
स वै महाभागवतो ह्युत्तमः परिकीर्तितः ॥ ७८ ॥
यस्य यत्नेनेन्द्रियाणां विष्णौ प्रीतिर्हि जायते ।
स वै भागवतो विप्रः मध्यमः समुदाहृतः ॥ ७९ ॥
यस्येन्द्रियैः कृष्णसेवा कृता प्रीतिविवर्जिता ।
स प्राकृतो भागवतो भक्तः कामविवर्जितः ॥ ८० ॥
हरिलीलाश्रुतोच्चारं यः प्रीत्या कुरुते सदा ।
स वै महाभागवतो ह्युत्तमो लोकपावनः ॥ ८१ ॥
श्रवणं कीर्तनं विष्णौ प्रीत्यायासौ तु यो नरः ।
कुर्यादहरहः शश्वत् प्रीतिमान् स च मध्यमः ॥ ८२ ॥
यामैकमात्रं यः कुर्याच्छ्रवणं कीर्तनं हरेः ।
प्रीत्या विष्णुजनद्वेषहीनः प्राकृत उच्यते ॥ ८३ ॥
यद्यन्यलक्षणं चान्यभक्ते लक्ष्येत सज्जनैः ।
तथापि निष्ठामालक्ष्य तं तं जानीहि सत्तम ॥ ८४ ॥
यद्धर्मनिष्ठा ये भक्ता भवन्ति द्विजसत्तम ।
तत्प्रसङ्गाद्यनुष्ठानं तत्प्रीतेः कारणं परम् ॥ ८५ ॥
तथापि निर्गुणा ये च ये च भागवता मताः ।

तेषु प्रीतिर्महाभाग दुष्करेति मयोच्यते ॥ ८६ ॥
हरिलीलाश्रुताचारपरेषु सततं त्वया ।
कार्या प्रीतिस्तत्र हरेर्यथा भक्तिर्न नश्यति ॥ ८७ ॥
इत्येतत्कथितं विप्र साधूनां लक्षणं पृथक् ।
भक्तेषु प्रीतिकरणं जनानां मुक्तिकारणम् ॥ ८८ ॥
साधनेन मया बाल भक्तिभेदो निरूपितः ।
स सार्ववर्णिकः शुद्धः सर्वाश्रमिश्रमापहः ॥ ८९ ॥
सर्वकालभवो नित्यः सर्वदैशिकसिद्धिदः ।
चतुर्युगेष्वभिमतो भगवत्प्रियसाधकः ॥ ९० ॥

इति सात्वततन्त्रे चतुर्थः पटलः ॥

---

## अथ पञ्चमः पटलः ।

### श्रीनारद उवाच ॥

कथितं मे सुरगुरो भगवद्भक्तिलक्षणम् ।
चतुर्युगेऽप्यभिमतं सर्वलोकसुखावहम् ॥ १ ॥
अधुना वद देवेश जनानां हितकाम्यया ।
युगानुरूपं श्रीविष्णोः सेवया मोक्षसाधनम् ॥ २ ॥
प्रजानां लक्षणं विष्णोर्मूर्तिलिङ्गं पृथग्विधम् ।
धर्मं च नामसङ्ख्या च समासेन सुरेश्वर ॥ ३ ॥

### श्रीशिव उवाच ॥

कृते युगे प्रजाः सर्वाः शुद्धा रागादिवार्जिताः ।
औत्पत्तिकेन योगेन शान्ताः शमदृशो मताः ॥ ४ ॥
तेषां तु भगवद्ध्यानं संसारार्णवतारकम् ।
तदेव परमो धर्मस्तद्युगस्य महामते ॥ ५ ॥
तद्ध्यानं त्रिविधं प्रोक्तं दशभिर्नामभिर्युतम् ।

निरालम्बं सावलम्बं सर्वान्तर्यामिधारणम् ॥ ६ ॥
तत्षडङ्गयुतं कुर्यात्समाध्यवधिमुत्तमम् ।
दुःखग्रहं निरालम्बं प्रथमं शृणु सत्तम ॥ ७ ॥
अहिंसा ब्रह्मचर्यं च सत्यं लज्जा ह्यकार्यतः ।
अस्तेयोऽसञ्चयो मौनमसङ्गमभयं दया ॥ ८ ॥
धर्मं स्थैर्यं च विश्वासो यमा द्वादश सत्तम ।
यमा(१)द्यमङ्गं प्रथमं कुर्याद्ध्याता ह्यतन्द्रितः ॥ ९ ॥
देहशौचं मनःशौचं जाप्यं होमं तपो व्रतम् ।
श्राद्धमतिथिशुश्रूषां तीर्थसेवां सुतुष्टिदाम् ॥ १० ॥
परार्थेहां गुरोः सेवां द्विषड्नियमसंज्ञितम् ।
कुर्याद्ध्यानं द्वितीयाङ्गं तृतीयाङ्गं च मे शृणु ॥ ११ ॥
स्वजानुलग्ने पादाग्रे कुर्याज्जङ्घेऽन्तरान्तरे ॥
उत्सङ्गमध्ये हस्तौ द्वौ तत्स्थानमासनं स्मृतम् ॥ १२ ॥
प्रणवेनैव मन्त्रेण पूरकुम्भकरेचकैः ।
विपर्ययेण वा कुर्यात्तुर्याङ्गं प्राणसंयमम् ॥ १३ ॥
विषयेभ्यस्त्विन्द्रियाणां संयमं मनसा हृदि ।
कुर्यादतन्द्रितो योगी प्रत्याहारं तु पञ्चमम् ॥ १४ ॥
प्राणेन मनसः साक्षात्स्थैर्यं ध्यानाङ्गमुत्तमम् ।
कुर्यात्समाहितो योगी स्वनासाग्रावलोकनः ॥ १५ ॥
तेजोमयं स्वप्रकाशमवाङ्मनसगोचरम् ।
लक्षीकृत्य धिया तिष्ठेद्यावन्नैव प्रकाशते ॥ १६ ॥
एवं चाहरहः कुर्वन्योगी संशुद्धकिल्बिषः ।
चिरात्प्राप्नोति परमां समाधिं ब्रह्मणः पदम् ॥ १७ ॥
सावशेषं हरेर्ध्यानं शृणु विप्र समासतः ।
तेनैव विधिना युक्तो मनसा चिन्तयेद्यथा ॥ १८ ॥

---

(१) यमाद्यं यमरूपं आद्यं प्रथमङ्गमित्यर्थः ।

हृत्पद्मकर्णिकामध्ये शुद्धसत्त्वतनुं हरिम् ।
पुरुषं चतुर्भुजं ध्यायेच्छुद्धस्फटिकसन्निभम् ॥ १९ ॥
जटाधरं वल्कलिनं कृष्णसाराजिनोत्तरम् ।
अक्षमालां यज्ञसूत्रं तथा दण्डकमण्डलुम् ॥ २० ॥
बिभ्राणं हृद्युगाराध्यं ब्रह्मचारिणमव्ययम् ।
मुखारविन्दं सुनसं सुभ्रुवं सुकपोलिनम् ॥ २१ ॥
सुवर्णशकलाभातं सुद्विजं कम्बुकन्धरम् ।
दीर्घायतचतुर्बाहुं करपल्लवशोभितम् ॥ २२ ॥
सुचक्षुषं सुहृदयं सूदरं बलिभिर्युतम् ।
निम्ननाभिं सुचारूरुजानुजङ्घापदं शुभम् ॥ २३ ॥
चार्वङ्गुलिदलाकारं नखचन्द्रद्युतिप्रभम् ।
एवं चिन्तयतो रूपं विष्णोर्लोकमनोहरम् ॥ २४ ॥
तस्याशु परमानन्दस्सम्पदाशु भविष्यति ।
आशुसिद्धिकरं चातस्सर्वान्तर्यामिधारणम् ॥ २५ ॥
शृणुष्वावहितो विप्र मानस्तम्भाविवर्जितम् ।
सर्वं चराचरमिदं भगवद्रूपधिष्ठितम् ॥ २६ ॥
भावयेद्द्वेषहीनेन कायवाङ्मनसा द्विज ।
उत्तमान्मानयेद्भक्त्या समान्मित्रतया द्विज ॥ २७ ॥
अधमान्दयया शत्रूनुपेक्षेत दयान्वितः ।
एवं भावयतस्तस्य यावत्सर्वात्मदर्शनम् ॥ २८ ॥
अचिरात्परमानन्दसन्दोहं मनसाऽऽप्नुयात् ।
त्रेतायां प्राणिनः सर्वे जपहोमपरायणाः ॥ २९ ॥
सुविनीताः सुखावृत्ता महाशाला महात्मनः ।
तेषां तु भगवद्यागो ह्यञ्जसा मुक्तिसाधकः ॥ ३० ॥
स एव परमो धर्मस्त्रेतायां द्विजसत्तम ।
तस्मिन्यजन्ति रक्ताभं यज्ञमूर्तिं जगद्गुरुम् ॥ ३१ ॥

नित्यनैमित्तिकैः सर्वैर्यागैर्नामाष्टकायुतैः ।
त्रैविद्येन विधानेन यान्ति मुक्तिं तदा जनाः ॥ ३२ ॥
द्वापरे तु जना हृष्टाः पुष्टाः कर्मकृतिक्षमाः ।
भोगानुसक्तमनसः सुखदुःखसमावृताः ॥ ३३ ॥
भगवत्पूजनं तेषां मोक्षसाधनमुत्तमम् ।
साङ्गोपाङ्गं केवलं च द्विविधं पूजनं स्मृतम् ॥ ३४ ॥
तदेव परमो धर्मो द्वापरस्य युगस्य वै ।
तस्मिन्यजन्ति पुरुषा महाराजोक्तलक्षणम् ॥ ३५ ॥
पीतवर्णं वेदमन्त्रैर्नाम्नां द्वादशभिः समम् ।
कलौ प्रजा मन्दभाग्या अलसा दुःखसंयुताः ॥ ३६ ॥
शिश्नोदरपराः क्षुद्रा दीना मलिनचेतसः ।
तेषामेकविधं प्रोक्तमञ्जसा मुक्तिकारणम् ॥ ३७ ॥
सर्वसौख्यकरं चापि कृष्णनामानुकीर्तनम् ।
यतः कलियुगस्यादौ भगवान्पुरुषोत्तमः ॥ ३८ ॥
अवतीर्य यशस्तेने शुद्धं कलिमलापहम् ।
ध्यानयोगक्रियाः सर्वाः स संहृत्य दयापरः ॥ ३९ ॥
स्वकीये यशसि स्थाप्य गतो वैकुण्ठमुत्तमम् ।
स तात परमो देवो देवकीदेविनन्दनः ॥ ४० ॥
इन्द्रनीलसमः श्यामस्तन्त्रमन्त्रैर्य इज्यते ।
तस्मिन् कलियुगे विप्र श्रुत्वा हरियशोऽमलाः ॥ ४१ ॥
प्रायो भक्ता भविष्यन्ति तस्माच्छ्रेष्ठयुगः कलिः ।
अतः कृतादिषु प्रजाः कलौ सम्भवमात्मनः ॥ ४२ ॥
वाञ्छन्ति धर्मपरमा भगवद्भक्तिकारणम् ।
ध्यानेनेष्ट्या पूजनेन यत्फलं लभ्यते जनैः ॥ ४३ ॥
कृतादिषु कलौ तद्वै कीर्तनादिषु लभ्यते ।
न देशकालकर्तॄणां नियमः कीर्तने स्मृतः ॥ ४४ ॥

तस्मात्कलौ परो धर्मो हरिकीर्तेः सुकीर्तनम् ।
यतः कलिं प्रशसन्ति शिष्टास्त्रियुगवर्तिनः ॥ ४५ ॥
यत्र कीर्तनमात्रेण प्राप्नोति परमं पदम् ।
कृतादावपि ये जीवा न मुक्ता निजधर्मतः ॥ ४६ ॥
तेऽपि मुक्तिं प्रयास्यन्ति कलौ कीर्तनमात्रतः ।
कलेर्दोषसमुद्रस्य गुण एको महान् यतः ॥ ४७ ॥
नाम्नां सङ्कीर्तनेनैव चातुर्वर्ग्यं जनोऽश्नुते ।
कृतादिष्वपि विप्रेन्द्र हरिनामानुकीर्तनम् ॥ ४८ ॥
तपादिसाध्यं तद्भूयः कलावुभयतां गतम् ।
तस्मात्कलियुगे विष्णोर्नामकीर्तनमुत्तमम् ॥ ४९ ॥
साधनं भक्तिनिष्ठानां साध्यं चैव प्रकीर्तितम् ।
येन केनापि भावेन कीर्तयन् सततं हरिम् ॥ ५० ॥
हित्वा पापं गतिं यान्ति किमुतच्छ्रद्धया गृणन् ।
कलौ नामपरा एव सततं द्विजसत्तम ॥ ५१ ॥
उक्ता महाभागवता भगवत्प्रियकारिणः ।
तस्मात्सर्वात्मना विप्र कुरु श्रीकृष्णकीर्तनम् ॥ ५२ ॥
श्रद्धया सततं युक्त एतदेव महाफलम् ।

इति श्रीसात्वततन्त्रे पञ्चमः पटलः ॥

---

## षष्ठः पटलः ।

### श्रीनारद उवाच ।

कथितं मे त्वया देव हरिनामानुकीर्तनम् ।
पापापहं महासौख्यं भगवद्भक्तिकारणम् ॥ १ ॥
तत्राहं यानि नामानि कीर्तयामि सुरोत्तम ।
तान्यहं ज्ञातुमिच्छामि साकल्येन कुतूहलात् ॥ २ ॥

श्रीशिव उवाच ॥
भूम्यम्बुतेजसां ये वै परमाणूनपि द्विज ।
शक्यन्ते गणितुं भूयो जन्मभिर्न हरेर्गुणान् ॥ ३ ॥
तथापि मुख्यं वक्ष्यामि श्रीविष्णोः परमाद्भुतम् ।
नाम्नां सहस्रं पार्वत्यै यदिहोक्तं कृपालुना ॥ ४ ॥
समाधिनिष्ठं मां दृष्ट्वा पार्वती वरवर्णिनी ।
अपृच्छत्परमं देवं भगवन्तं जगद्गुरुम् ॥ ५ ॥
तदा तस्यै मया प्रोक्तो मत्परो जगदीश्वरः ।
नाम्नां सहस्रं च तथा गुणकर्मानुसारतः ॥ ६ ॥
तदहं तेऽभिवक्ष्यामि महाभागवतो भवान् ।
यस्यैकस्मरणेनैव पुमान् सिद्धिमवाप्नुयात् ॥ ७ ॥
उद्यन्नवीनजलदाभमकुण्ठधिष्ण्यं
विद्योतितानलमनोहरपीतवासम् ।
भास्वन्मयूखमुकुटाङ्गदहारयुक्तं
काञ्चीकलापवलयाङ्गुलिभिर्विभातम् ॥ ८ ॥
ब्रह्मादिदेवगणवन्दितपादपद्मं
श्रीसेवितं सकलसुन्दरसन्निवेशम् ।
गोगोपवनितामुनिवृन्दजुष्टं
कृष्णं पुराणपुरुषं मनसा स्मरामि ॥ ९ ॥
ॐनमो वासुदेवाय कृष्णाय परमात्मने ।
प्रणतक्लेशसंहर्त्रे परमानन्ददायिने ॥ १० ॥
ॐश्रीकृष्णः श्रीपतिः श्रीमान् श्रीधरः श्रीसुखाश्रयः ।
श्रीदाता श्रीकरः श्रीशः श्रीसेव्यः श्रीविभावनः ॥ ११ ॥
परमात्मा परं ब्रह्म परेशः परमेश्वरः ।
परानन्दः परं धाम परमानन्ददायकः ॥ १२ ॥
निरालम्बो निर्विकारो निर्लेपो निरवग्रहः ।
नित्यानन्दो नित्यमुक्तो निरीहो निस्पृहप्रियः ॥ १३ ॥

प्रियम्वदः प्रियकरः प्रियदः प्रियसज्जनः ।
प्रियानुगः प्रियालम्बी प्रियकीर्तिः प्रियात्प्रियः ॥ १४ ॥
महात्यागी महाभोगी महायोगी महातपाः ।
महात्मा महतां श्रेष्ठो महालोकपतिर्महान् ॥ १५ ॥
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धसाधनः ।
सिद्धेशः सिद्धमार्गाग्रः सिद्धलोकैकपालकः ॥ १६ ॥
इष्टो विशिष्टः शिष्टेष्टो महिष्ठो जिष्णुरुत्तमः ।
ज्येष्ठः श्रेष्ठश्च सर्वेष्टो विष्णुर्भ्राजिष्णुरव्ययः ॥ १७ ॥
विभुः शम्भुः प्रभुर्भूमा स्वभूः स्वानन्दमूर्तिमान् ।
प्रीतिमान् प्रीतिदाता च प्रीतिदः प्रीतिवर्द्धनः ॥ १८ ॥
योगेश्वरो योगगम्यो योगीशो योगपारगः ।
योगदाता योगपतिर्योगसिद्धिविधायकः ॥ १९ ॥
सत्यव्रतः सत्यपरः त्रिसत्यः सत्यकारणः ।
सत्याश्रयः सत्यहरः सत्पालिः सत्यवर्द्धनः ॥ २० ॥
सर्वानन्दः सर्वहरः सर्वगः सर्ववश्यकृत् ।
सर्वपाता सर्वसुखः सर्वश्रुतिगणार्णवः ॥ २१ ॥
जनार्दनो जगन्नाथो जगत्त्राता जगत्पिता ।
जगत्कर्ता जगद्धर्ता जगदानन्दमूर्तिमान् ॥ २२ ॥
धरापतिर्लोकपतिः स्वर्पतिर्जगतांपतिः ।
विद्यापतिर्वित्तपतिः सत्पतिः कमलापतिः ॥ २३ ॥
चतुरात्मा चतुर्बाहुश्चतुर्वर्गफलप्रदः ।
चतुर्व्यूहश्चतुर्द्धामा चतुर्युगविधायकः ॥ २४ ॥
आदिदेवो देवदेवो देवेशो देवधारणः ।
देवकृद्देवभृद्देवो देवेडितपदाम्बुजः ॥ २५ ॥
विश्वेश्वरो विश्वरूपी विश्वात्मा विश्वतोमुखः ।
विश्वसूर्विश्वफलदो विश्वगो विश्वनायकः ॥ २६ ॥

भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ।
भूतिदो भूतिविस्तारो विभूतिर्भूतिपालकः ॥ २७ ॥
नारायणो नारशायी नारसूर्नारजीवनः ।
नारैकफलदो नारमुक्तिदो नारनायकः ॥ २८ ॥
सहस्ररूपः साहस्रनामा साहस्रविग्रहः ।
सहस्रशीर्षा साहस्रपादाक्षिभुजशीर्षवान् ॥ २९ ॥
पद्मनाभः पद्मगर्भः पद्मी पद्मनिभेक्षणः ।
पद्मशायी पद्ममाली पद्माङ्कितपदद्वयः ॥ ३० ॥
वीर्यवान् स्थैर्यवान्वाग्मी शौर्यवान्धैर्यवान् क्षमी ।
धीमान् धर्मपरो भोगी भगवान् भयनाशनः ॥ ३१ ॥
जयन्तो विजयो जेता जयदो जयवर्द्धनः ।
अमानो मानदो मान्यो महिमावान्महाबलः ॥ ३२ ॥
सन्तुष्टस्तोषदो दाता दमनो दीनवत्सलः ।
ज्ञानी यशस्वान् धृतिमान् सहओजोबलाश्रयः ॥ ३३ ॥
हयग्रीवो महातेजा महार्णवविनोदकृत् ।
मधुकैटभविध्वंसी वेदकृद्वेदपालकः ॥ ३४ ॥
सनत्कुमारः सनकः सनन्दश्च सनातनः ।
अखण्डब्रह्मव्रतवानात्मा योगविवेचकः ॥ ३५ ॥
श्रीनारदो देवऋषिः कर्माकर्मप्रवर्तकः ।
सात्वतागमकृल्लोकहिताहितप्रसूचकः ॥ ३६ ॥
आदिकालो यज्ञतत्त्वं धातृनासापुटोद्भवः ।
दन्ताग्रन्यस्तभूगोलो हिरण्याक्षबलान्तकः ॥ ३७ ॥
पृथ्वीपतिः शीघ्रवेगो रोमान्तर्गतसागरः ।
श्वासावधूतहेमाद्रिः प्रजापतिपतिस्तुतः ॥ ३८ ॥
अनन्तो धरणीभर्ता पातालतलवासकृत् ।
कालाग्निजवनो नागराजराजो महाद्युतिः ॥ ३९ ॥

महाकूर्मो विश्वकायः शेषभृक् सर्वपालकः ।
लोकपितृगणाधीशः पितृस्तुतमहापदः ॥ ४० ॥
कृपामयः स्वयं व्यक्तिर्ध्रुवप्रीतिविवर्द्धनः ।
ध्रुवस्तुतपदो विष्णुलोकदो लोकपूजितः ॥ ४१ ॥
शुक्लः कर्दमसन्तप्तस्तपस्तोषितमानसः ।
मनोऽभीष्टप्रदो हर्षबिन्दूंचितसरोवरः ॥ ४२ ॥
यज्ञः सुरगणाधीशो दैत्यदानवघातकः ।
मनुत्राता लोकपालो लोकपालकजन्मकृत् ॥ ४३ ॥
कपिलाख्यः साङ्ख्यपाता कर्दमाङ्गसमुद्भवः ।
सर्वसिद्धगणधीशो देवहूतिगतिप्रदः ॥ ४४ ॥
दत्तोऽत्रितनयो योगी योगमार्गप्रदर्शकः ।
अनसूयानन्दकरः सर्वयोगिजनस्तुतः ॥ ४५ ॥
नारायणो नरऋषिर्धर्मपुत्रो महामनाः ।
महेशशूलदमनो महेशैकवरप्रदः ॥ ४६ ॥
आकल्पान्ततपोधीरो मन्मथादिमदापहः ।
ऊर्वशीस्रग्जितानङ्गो मार्कण्डेयप्रियप्रदः ॥ ४७ ॥
ऋभवो नाभिसुखदो मेरुदेवीप्रियात्मजः ।
योगिराजद्विजस्रष्टा योगचर्याप्रदर्शकः ॥ ४८ ॥
अष्टबाहुर्दक्षयज्ञपावनोऽखिलसत्कृतः ।
दक्षेशद्वेषशमनो दक्षज्ञानप्रदायकः ॥ ४९ ॥
प्रियव्रतकुलोत्पन्नो गयनामा महायशाः ।
उदारकर्मा बहुविन्महागुणगणार्णवः ॥ ५० ॥
हंसरूपी तत्त्ववक्ता गुणागुणविवेचकः ।
धातृलज्जाप्रशमनो ब्रह्मचारिजनप्रियः ॥ ५१ ॥
वैश्यः पृथुः पृथ्विदोग्धा सर्वजीवनदोहकृत् ।
आदिराजो जनावासकारको भूसमीकरः ॥ ५२ ॥

प्रचेतोऽभिष्टुतपदः शान्तमूर्तिः सुदर्शनः ।
दिवारात्रिगणाधीशः केतुमानजनाश्रयः ॥ ५३ ॥
श्रीकामदेवः कमलाकामकेलिविनोदकृत् ।
स्वपादरतिदोऽभीष्टसुखदो दुःखनाशनः ॥ ५४ ॥
विभुर्द्धमभृतां श्रेष्ठो वेदशीर्षो द्विजात्मजः ।
अष्टाशीतिसहस्राणां मुनीनामुपदेशदः ॥ ५५ ॥
सत्यसेनो यक्षरक्षोदहनो दीनपालकः ।
इन्द्रमित्रः सुरारिघ्नः सूनृताधर्मनन्दनः ॥ ५६ ॥
हरिर्गजवरत्राता ग्राहपाशविनाशकः ।
त्रिकूटाद्रिवनश्लाघी सर्वलोकहितैषणः ॥ ५७ ॥
वैकुण्ठशुभ्रासुखदो विकुण्ठासुन्दरीसुतः ।
रमाप्रियकरः श्रीमान्निजलोकप्रदर्शकः ॥ ५८ ॥
विप्रशापपरीखिन्ननिर्जरार्तिनिवारणः ।
दुग्धाब्धिमथनो विप्रो विराजतनयोऽजितः ॥ ५९ ॥
मन्दाराद्रिधरः कूर्मो देवदानवशर्मकृत् ।
जम्बूद्वीपसमस्रष्टा पीयूषोत्पत्तिकारणम् ॥ ६० ॥
धन्वन्तरी रुक्शमनोऽमृतधुक् रुक्प्रशान्तकः ।
आयुर्वेदकरो वैद्यराजो विद्याप्रदायकः ॥ ६१ ॥
देवाभयकरो दैत्यमोहिनी कामरूपिणी ।
गीर्वाणामृतपो दुष्टदैत्यदानववञ्चकः ॥ ६२ ॥
महामत्स्यो महाकायः शल्कान्तर्गतसागरः ।
वेदारिदैत्यदमनो व्रीहिबीजसुरक्षकः ॥ ६३ ॥
पुच्छाघातभ्रमात्सिन्धुः सत्यव्रतप्रियप्रदः ।
भक्तसत्यव्रतत्राता योगत्रयप्रदर्शकः ॥ ६४ ॥
नरसिंहो लोकजिह्वः शङ्कुकर्णो नखायुधः ।
सटावधूतजलदो दन्तद्युतिजितप्रभः ॥ ६५ ॥

हिरण्यकशिपुध्वंसी बहुदानवदर्पहा ।
प्रह्लादस्तुतपादाब्जो भक्तसंसारतापहा ॥ ६६ ॥
ब्रह्मेन्द्ररुद्रभीतिघ्नो देवकार्यप्रसाधकः ।
ज्वलज्जलनसङ्काशः सर्वभीतिविनाशकः ॥ ६७ ॥
महाकलुषविध्वंसी सर्वकामवरप्रदः ।
कालविक्रमसंहर्ता ग्रहपीडाविनाशकः ॥ ६८ ॥
सर्वव्याधिप्रशमनः प्रचण्डरिपुदण्डकृत् ।
उग्रभैरवसन्त्रस्तहरार्तिविनिवारकः ॥ ६९ ॥
ब्रह्मचर्मावृतशिराः शिवशीर्षैकनूपुरः ।
द्वादशादित्यशीर्षैकमणिर्दिक्पालभूषणः ॥ ७० ॥
वामनोऽदितिभीतिघ्नो द्विजातिगणमण्डनः ।
त्रिपदव्याजयाच्ञाप्तबलित्रैलोक्यसम्पदः ॥ ७१ ॥
पदनखक्षतब्रह्माण्डकटाहोऽमितविक्रमः ।
स्वर्धुनीतीर्थजननो ब्रह्मपूज्यो भयापहः ॥ ७२ ॥
स्वाङ्घ्रिवारिहताघौघो विश्वरूपैकदर्शनः ।
बलिप्रियकरो भक्तस्वर्गदोग्धा गदाधरः ॥ ७३ ॥
जामदग्न्यो महावीर्यः पर्शुभृत्कार्तवीर्यजित् ।
सहस्रार्जुनसंहर्ता सर्वक्षत्रकुलान्तकः ॥ ७४ ॥
निःक्षत्रपृथ्वीकरणो वीराजिद्विप्रराज्यदः ।
द्रोणास्त्रवेदप्रवदो महेशगुरुकीर्तिदः ॥ ७५ ॥
सूर्यवंशाब्जतरणिः श्रीमद्दशरथात्मजः ।
श्रीरामो रामचन्द्रश्च रामभद्रोऽमितप्रभः ॥ ७६ ॥
नीलवर्णप्रतीकाशः कौसल्याप्राणजीवनः ।
पद्मनेत्रः पद्मवक्त्रः पद्माङ्कितपदाम्बुजः ॥ ७७ ॥
प्रलम्बबाहुश्चार्वङ्गो रत्नाभरणभूषितः ।
दिव्याम्बरो दिव्यधनुर्दिष्टदिव्यास्त्रपारगः ॥ ७८ ॥

निस्त्रिंशपाणिर्वीरेशोऽपरिमेयपराक्रमः ।
विश्वामित्रगुरुर्धन्वी धनुर्वेदविदुत्तमः ॥ ७९ ॥
ऋजुमार्गनिमित्तेषु सङ्कृताडितताडकः ।
सुबाहुर्बाहुवीर्याढ्यबहुराक्षसघातकः ॥ ८० ॥
प्राप्तचण्डीशदोर्दण्डचण्डकोदण्डखण्डनः ।
जनकानन्दजनको जानकीप्रियनायकः ॥ ८१ ॥
अरातिकुलदर्पघ्नो ध्वस्तभार्गवविक्रमः ।
पितृवाक्यसक्तराज्यश्रीर्वनवासकृतोत्सवः ॥ ८२ ॥
विराधराधदमनश्चित्रकूटाद्रिमन्दिरः ।
द्विजशापसमुच्छन्नदण्डकारण्यकर्मकृत् ॥ ८३ ॥
चतुर्दशसहस्रोग्रराक्षसघ्नः खरान्तकः ।
त्रिशिरःप्राणशमनो दुष्टदूषणदूषणः ॥ ८४ ॥
छद्ममारीचमथनो जानकीविरहार्तिहृत् ।
जटायुषः क्रियाकारी कबन्धवधकोविदः ॥ ८५ ॥
ऋष्यमूकगुहावासी कपिपश्चमसख्यकृत् ।
वामपादाग्रनिक्षिप्तदुन्दुभ्यस्थिबृहद्गिरिः ॥ ८६ ॥
सकण्टकारदुर्भेदसप्ततालप्रभेदकः ।
किष्किन्धाधिपवालिघ्नो मित्रसुग्रीवराज्यदः ॥ ८७ ॥
आञ्जनेयस्वलाङ्गूलदग्धलङ्कामहोदयः ।
सीताविरहविस्पष्टरोषक्षोभितसागरः ॥ ८८ ॥
गिरिकूटसमुत्क्षेपसमुद्राद्भुतसेतुकृत् ।
पादप्रहारसन्त्रस्तविभीषणभयापहः ॥ ८९ ॥
अङ्गदोक्तिपरिक्लिष्टघोररावणसैन्यजित् ।
निकुम्भकुम्भधूम्राक्षकुम्भकर्णादिवीरहा ॥ ९० ॥
कैलाससहनोन्मत्तदशाननशिरोहरः ।
अग्निसंस्पर्शसंशुद्धसीतासम्वरणोत्सुकः ॥ ९१ ॥

कपिराक्षसराजाङ्गप्राप्तराज्यनिजाश्रयः ।
अयोध्याधिपतिः सर्वराजन्यगणशेखरः ॥ ९२ ॥
अचिन्त्यकर्मा नृपतिः प्राप्तसिंहासनोदयः ।
दुष्टदुर्बुद्धिदलनो दीनहीनैकपालकः ॥ ९३ ॥
सर्वसम्पत्तिजननस्तिर्यङ्न्यायविवेचकः ।
शूद्रघोरतपःप्लुष्टद्विजपुत्रैकजीवनः ॥ ९४ ॥
दुष्टवाक्क्लिष्टहृदयः सीतानिर्वासकारकः ।
तुरङ्गमेधक्रतुयाट् श्रीमत्कुशलवात्मजः ॥ ९५ ॥
सत्यार्थत्यक्तसौमित्रिः स्वनीतजनसङ्ग्रहः ।
सत्कर्णपूरसत्कीर्तिः कीर्त्यालोकाघनाशनः ॥ ९६ ॥
भरतो ज्येष्ठपादाब्जरतित्यक्तनृपासनः ।
सर्वसद्गुणसम्पन्नः कोटिगन्धर्वनाशकः ॥ ९७ ॥
लक्ष्मणो ज्येष्ठनिरतो देववैरिगणान्तकः ।
इन्द्राजित्प्राणशमनो भ्रातृमान् त्यक्तविग्रहः ॥ ९८ ॥
शत्रुघ्नोऽमित्रशमनो लवणान्तककारकः ।
आर्यभ्रातृजनश्लाघ्यः सतां श्लाघ्यगुणाकरः ॥ ९९ ॥
वटपत्रपुटस्थायी श्रीमुकुन्दोऽखिलाश्रयः ।
तनूदरार्पितजगन्मृकण्डतनयः खगः ॥ १०० ॥
आद्यो देवगणाग्रण्यो मितस्तुतिनतिप्रियः ।
वृत्रघोरतनुत्रस्तदेवसन्मन्त्रसाधकः ॥ १०१ ॥
ब्रह्मण्यो ब्राह्मणश्लाघी ब्रह्मण्यजनवत्सलः ।
गोष्पदाप्सुगलद्गात्रवालखिल्यजनाश्रयः ॥ १०२ ॥
दौस्वस्तिर्यज्वनां श्रेष्ठो नृपविस्मयकारकः ।
तुरङ्गमेधबहुकृद्वदान्यगणशेखरः ॥ १०३ ॥
वासवीतनयो व्यासो वेदशाखानिरूपकः ।
पुराणभारताचार्यः कलिलोकहितैषणः ॥ १०४ ॥

रोहिणीहृदयानन्दो बलभद्रो बलाश्रयः ।
सङ्कर्षणः सीरपाणिः मुशलास्त्रोऽमलद्युतिः ॥ १०५ ॥
शङ्खकुन्देन्दुश्वेताङ्गस्तालभिद्धेनुकान्तकः ।
मुष्टिकारिष्टहननो लाङ्गलाकृष्टयामुनः ॥ १०६ ॥
प्रलम्बप्राणहा रुक्मीमथनो द्विविदान्तकः ।
रेवतीप्रीतिदो रामारमणो बल्वलान्तकः ॥ १०७ ॥
हस्तिनापुरसङ्कर्षी कौरवार्चितसत्पदः ।
ब्रह्मादिस्तुतपादाब्जो देवयादवपालकः ॥ १०८ ॥
मायापतिर्महामायो महामायानिदेशकृत् ।
यदुवंशाब्धिपूर्णेन्दुर्बलदेवप्रियानुजः ॥ १०९ ॥
नराकृतिः परं ब्रह्म परिपूर्णः परोदयः ।
सर्वज्ञानादिसम्पूर्णः पूर्णानन्दः पुरातनः ॥ ११० ॥
पीताम्बरः पीतनिद्रः पीतवेश्ममहातपाः ।
महोरस्कोमहाबाहुर्महार्हमणिकुण्डलः १११ ॥
लसद्गण्डस्थलीहैममौलिमालाविभूषितः ।
सुचारुकर्णः सुभ्राजन्मकराकृतिकुण्डलः ॥ ११२ ॥
नीलकुञ्चितसुस्निग्धकुन्तलः कौमुदीमुखः ।
सुनासः कुन्ददशनो लसत्कोकनदाधरः ॥ ११३ ॥
सुमन्दहासो रुचिरभ्रूमण्डलविलोकनः ।
कम्बुकण्ठो बृहद्ब्रह्मा वलयाङ्गदभूषणः ॥ ११४ ॥
कौस्तुभी वनमाली च शङ्खचक्रगदाब्जभृत् ।
श्रीवत्सलक्ष्म्यालक्ष्याङ्गः सर्वलक्षणलक्षणः ॥ ११५ ॥
दलोदरो निम्ननाभिर्निरवद्यो निराश्रयः ।
नितम्बबिम्बव्यालम्बिकिङ्किणीकाञ्चिमण्डितः ॥ ११६ ॥
समजङ्घाजानुयुग्मः सुचारुरुचिराजितः ।
ध्वजवज्राङ्कुशाम्भोजशराङ्कितपदाम्बुजः ॥ ११७ ॥

भक्तभ्रमरसङ्घातपीतपादाम्बुजासवः ।
नखचन्द्रमणिज्योत्स्नाप्रकाशितमहामनाः ॥ ११८ ॥
पादाम्बुजयुगन्यस्तलसन्मञ्जीरराजितः ।
स्वभक्तहृदयाकाशलसत्पङ्कजविस्तरः ॥ ११९ ॥
सर्वप्राणिजनानन्दो वसुदेवनुतिप्रियः ।
देवकीनन्दनो लोकनन्दिकृद्भक्तभीतिभित् ॥ १२० ॥
शेषानुगः शेषशायी यशोदानतिमानदः ।
नन्दानन्दकरो गोपगोपीगोकुलबान्धवः ॥ १२१ ॥
सर्वव्रजजनानन्दी भक्तवल्लभवल्लभः ।
वल्लव्यङ्कलसद्गात्रो बल्लवीबाहुमध्यगः ॥ १२२ ॥
पीतपूतनिकास्तन्यः पूतनाप्राणशोषणः ।
पूतनोरस्थलस्थायी पूतनामोक्षदायकः ॥ १२३ ॥
समागतजनानन्दी शकटोच्चाटकारकः ।
प्राप्तविप्राशिषोधीशो लघिमादिगुणाश्रयः ॥ १२४ ॥
तृणावर्तगलग्राही तृणावर्तनिषूदनः ।
जनन्यानन्दजनको जनन्यामुखविश्वदृक् ॥ १२५ ॥
बालक्रीडारतो बालभाषालीलादिनिर्वृतः ।
गोपगोपीप्रियकरो गीतनृत्यानुकारकः ॥ १२६ ॥
नवनीतविलिप्ताङ्गो नवनीतलवप्रियः ।
नवनीतलवाहारी नवनीतानुतस्करः ॥ १२७ ॥
दामोदरोऽर्जुनोन्मूलो गोपैकमतिकारकः ।
वृन्दावनवनक्रीडो नानाक्रीडाविशारदः ॥ १२८ ॥
वत्सपुच्छसमाकर्षी वत्सासुरनिषूदनः ।
बकारिरघसंहारी बालाद्यन्तकनाशनः ॥ १२९ ॥
यमुनानिलसञ्जुष्टसुमृष्टपुलिनप्रियः ।
गोपालबालपूगस्थः स्निग्धदध्यन्नभोजनः ॥ १३० ॥

गोगोपगोपीप्रियकृद्वनभून्मोहखण्डनः ।
विधातुर्मोहजनकोऽत्यद्भुतैश्वर्यदर्शकः ॥ १३१ ॥
विधिस्तुतपदाम्भोजो गोपदारकबुद्धिभित् ।
कालीयदर्पदलनो नागनारीनुतिप्रियः ॥ १३२ ॥
दावाग्निशमनः सर्वव्रजभृज्जनजीवनः ।
मुञ्जारण्यप्रवेशाप्तकृच्छ्रदावाग्निदारणः ॥ १३३ ॥
सर्वकालसुखक्रीडो बर्हिबर्हावतंसकः ।
गोधुग्वधूजनप्राणो वेणुवाद्यविशारदः ॥ १३४ ॥
गोपीपिधानारुन्धानो गोपीव्रतवरप्रदः ।
विप्रदर्पप्रशमनो विप्रपत्नीप्रसाददः ॥ १३५ ॥
शतक्रतुवरध्वंसी शक्रदर्पमदापहः ।
धृतगोवर्द्धनगिरिर्व्रजलोकाभयप्रदः ॥ १३६ ॥
इन्द्रकीर्तिलसत्कीर्तिर्गोविन्दो गोकुलोत्सवः ।
नन्दत्राणकरो देवजलेशेडितसत्कथः ॥ १३७ ॥
व्रजवासिजनश्लाध्यो निजलोकप्रदर्शकः ।
सुवेणुनादमदनोन्मत्तगोपीविनोदकृत् ॥ १३८ ॥
गोधुग्वधूदर्पहरः स्वयशःकीर्तनोत्सवः ।
व्रजाङ्गनाजनारामो व्रजसुन्दरिवल्लभः ॥ १३९ ॥
रासक्रीडारतो रासमहामण्डलमण्डनः ।
वृन्दावनवनामोदी यमुनाकूलकेलिकृत् ॥ १४० ॥
गोपिकागीतिकागीतः शङ्खचूडशिरोहरः ।
महासर्पमुखग्रस्तत्रस्तनन्दविमोचकः ॥ १४१ ॥
सुदर्शनार्चितपदो दुष्टारिष्टविनाशकः ।
केशिद्वेषो व्योमहन्ता श्रुतनारदकीर्तनः ॥ १४२ ॥
अक्रूरप्रियकृत् क्रूररजकघ्नः सुवेशकृत् ।
सुदामदत्तमालाढ्यः कुब्जाचन्दनचर्चितः ॥ १४३ ॥

मथुराजनसंहर्षी चण्डकोदण्डखण्डकृत् ।
कंससैन्यसमुच्छेदी वणिग्विप्रगणार्चितः ॥ १४४ ॥
महाकुवलयापीडघाती चाणुरमर्दनः ।
रागशालागतापारनरनारीकृतोत्सवः ॥ १४५ ॥
कंसध्वंसकरः कंसस्वसारूप्यगतिप्रदः ।
कृतोग्रसेननृपतिः सर्वयादसौख्यकृत् ॥ १४६ ॥
तातमातृकृतानन्दो नन्दगोपप्रसाददः ।
श्रितसान्दीपनिगुरुर्विद्यासागरपारगः ॥ १४७ ॥
दैत्यपञ्चजनध्वंसी पाञ्चजन्यदरप्रियः ।
सान्दीपनिमृतापत्यदाता कालयमार्चितः ॥ १४८ ॥
सैरन्ध्रीकामसन्तापशमनोऽक्रूरप्रीतिदः ।
शार्ङ्गचापधरो नानाशरसन्धानकोविदः ॥ १४९ ॥
अभेद्यदिव्यकवचः श्रीमद्दारुकसारथिः ।
खगेन्द्रचिह्नितध्वजश्चक्रपाणिर्गदाधरः ॥ १५० ॥
नन्दकीयदुसेनाढ्योऽक्षयबाणनिषङ्गवान् ।
सुरासुराजेयरण्यो जितमागधयूथपः ॥ १५१ ॥
मागधध्वजिनीध्वंसी मथुरापुरपालकः ।
द्वारकापुरनिर्माता लोकस्थितिनियामकः ॥ १५२ ॥
सर्वसम्पत्तिजननः स्वजनानन्दकारकः ।
कल्पवृक्षाक्षितमहिः सुधर्मानीतभूतलः ॥ १५३ ॥
यवनासुरसंहर्ता मुचुकुन्देष्टसाधकः ।
रुक्मिणीद्विजसम्मन्त्ररथैकगतकुण्डिनः ॥ १५४ ॥
रुक्मिणीहारको रुक्मिमुण्डमुण्डनकारकः ।
रुक्मिणीप्रियकृत्साक्षाद्रुक्मिणीरमणीपतिः ॥ १५५ ॥
रुक्मिणीवदनाम्भोजमधुपानमधुव्रतः ।
स्यमन्तकनिमित्तात्मभक्तर्क्षाधिपजित् शुचिः ॥ १५६ ॥

जाम्बवार्चितपादाब्जः साक्षाज्जाम्बवतीपतिः ।
सत्यभामाकरग्राही कालिन्दीसुन्दरीप्रियः ॥ १५७ ॥
सुतीक्ष्णशृङ्गवृषभसप्तजिद्राजयूथभित् ॥
नग्नजित्तनयासत्यानायिकानायकोत्तमः ॥ १५८ ॥
भद्रेशो लक्ष्मणाकान्तो मित्रविन्दाप्रियेश्वरः ।
मुरजित्पीठसेनानीनाशनो नरकान्तकः ॥ १४९ ॥
धरार्चितपदाम्भोजो भगदत्तभयापहा ।
नरकाहृतदिव्यस्त्रीरत्नवाहादिनायकः ॥ १६० ॥
अष्टोत्तरशतव्यष्टसहस्रस्त्रीविलासवान् ।
सत्यभामाबलावाक्यपारिजातापहारकः ॥ १६१ ॥
देवेन्द्रबलभिज्जायाजातनानाविलासवान् ।
रुक्मिणीमानदलनः स्त्रीविलासाविमोहितः ॥ १६२ ॥
कामतातः साम्बसुतोऽसङ्ख्यपुत्रप्रपौत्रवान् ।
उशाशागतपौत्रार्थबाणबाहुसहस्रछित् ॥ १६३ ॥
नन्द्यादिप्रमथध्वंसी लीलाजितमहेश्वरः ।
महादेवस्तुतपदो नृगदुःखविमोचकः ॥ १६४ ॥
ब्रह्मस्वापहरक्लेशकथास्वजनपालकः ।
पौण्ड्रकारिः काशिराजशिरोहर्ता सदाजितः ॥ १६५ ॥
सुदक्षिणाव्रताराध्यशिवकृत्यानलान्तकः ।
वाराणसीप्रदहनो नारदेक्षितवैभवः ॥ १६६ ॥
अद्भुतैश्वर्यमहिमा सर्वधर्मप्रवर्तकः ।
जरासन्धनिरोधार्तभूभुजेरितसत्कथः ॥ १६७ ॥
नारदेरितसन्मित्रकार्यगौरवसाधकः ।
कलत्रपुत्रसन्मित्रसद्वृत्ताप्तगृहानुगः ॥ १६८ ॥
जरासन्धवधोद्योगकर्ता भूपतिशर्मकृत् ।
सन्मित्रकृत्याचरितो राजसूयप्रवर्तकः ॥ १६९ ॥

सर्वर्षिगणसंस्तुत्यश्चैद्यप्राणनिकृन्तकः ।
इन्द्रप्रस्थजनैः पूज्यो दुर्योधनविमोहनः ॥ १७० ॥
महेशदत्तसौभाग्यपुराभित् शत्रुघातकः ।
दन्तवक्रारिपुच्छेत्ता दन्तवक्रगतिप्रदः ॥ १७१ ॥
विदूरथप्रमथनो भूरिभारावतारकः ।
पार्थदूतः पार्थहितः पार्थार्थः पार्थसारथिः ॥ १७२ ॥
पार्थमोहसमुच्छेदी गीताशास्त्रप्रदर्शकः ।
पार्थबाणगतप्राणवीरकैवल्यरूपदः ॥ १७३ ॥
दुर्योधनादिदुर्वृत्तदहनो भीष्ममुक्तिदः ।
पार्थाश्वमेधाहरकः पार्थराज्यप्रसाधकः ॥ १७४ ॥
पृथाभीष्टप्रदो भीमजयदो विजयप्रदः ।
युधिष्ठिरेष्टसन्दाता द्रौपदीप्रीतिसाधकः ॥ १७५ ॥
सहदेवेरितपदो नकुलार्चितविग्रहः ।
ब्रह्मास्त्रदग्धगर्भस्थपुरुवंशप्रसाधकः ॥ १७६ ॥
पौरवेन्द्रपुरस्त्रीभ्यो द्वारकागमनोत्सवः ।
आनर्तदेशनिवसत्प्रजेरितमहत्कथः ॥ १७७ ॥
प्रियप्रीतिकरो मित्रविप्रदारिद्र्यभञ्जनः ।
तीर्थापदेशसन्मित्रप्रियकृन्नन्दनन्दनः ॥ १७८ ॥
गोपीजनज्ञानदाता तातक्रतुकृतोत्सवः ।
सद्वृत्तवक्ता सद्वृत्तकर्ता सद्वृत्तपालकः ॥ १७९ ॥
तातात्मज्ञानसन्दाता देवकीमृतपुत्रदः ।
श्रुतदेवप्रियकरो मैथिलानन्दवर्द्धनः ॥ १८० ॥
पार्थदर्पप्रशमनो मृतविप्रसुतप्रदः ।
स्त्रीरत्नवृन्दसन्तोषी जनकेलिकलोत्सवः ॥ १८१ ॥
चन्द्रकोटिजनानन्दी भानुकोटिसमप्रभः ।
कृतान्तकोटिदुर्लङ्घ्यः कामकोटिमनोहरः ॥ १८२ ॥

यक्षराट्कोटिधनवान् मरुत्कोटिस्ववीर्यवान् ।
समुद्रकोटिगम्भीरो हिमवत्कोट्यकम्पनः ॥ १८३ ॥
कोट्यश्वमेधाघहरः तीर्थकोट्यधिकाह्वयः ।
पीयूषकोटिमृत्युघ्नः कामधुक्कोट्यभीष्टदः ॥ १८४ ॥
शक्रकोटिविलासाढ्यः कोटिब्रह्माण्डनायकः ।
सर्वामोघोद्यमोऽनन्तकीर्तिर्निःसीमपौरुषः ॥ १८५ ॥
सर्वाभीष्टप्रदयशाः पुण्यश्रवणकीर्तनः ।
ब्रह्मादिसुरसङ्गीतवीतमानुषचेष्टितः ॥ १८६ ॥
अनादिमध्यनिधनो वृद्धिक्षयविवर्जितः ।
स्वभक्तोद्धवमुख्यैकज्ञानदो ज्ञानविग्रहः ॥ १८७ ॥
विप्रशापच्छलध्वस्तयदुवंशोग्रविक्रमः ।
सशरीरजराव्याधस्वर्गदः स्वर्गिसंस्तुतः ॥ १८८ ॥
मुमुक्षुमुक्तविषयिजनानन्दकरो यशः ।
कलिकालमलध्वंसियशाः श्रवणमङ्गलः ॥ १८९ ॥
भक्तप्रियो भक्तहितो भक्तभ्रमरपङ्कजः ।
स्मृतमात्राखिलत्राता यन्त्रमन्त्रप्रभञ्जकः ॥ १९० ॥
सर्वसम्पत्स्राविनामा तुलसीदामवल्लभः ।
अप्रमेयवपुर्भास्वदनर्घ्याङ्गविभूषणः ॥ १९१ ॥
विश्वैकसुखदो विश्वसज्जनानन्दपालकः ।
सर्वदेवशिरोरत्नमद्भुतानन्तभोगवान् ॥ १९२ ॥
अधोक्षजो जनाजीव्यः सर्वसाधुजनाश्रयः ।
समस्तभयभिन्नामा स्मृतमात्रार्तिनाशकः ॥ १९३ ॥
स्वयशःश्रवणानन्दजनरागी गुणार्णवः ।
अनिर्देश्यवपुस्तप्तशरणो जीवजीवनः ॥ १९४ ॥
परमार्थः परंवेद्यः परञ्ज्योतिः परागतिः ।
वेदान्तवेद्यो भगवाननन्तसुखसागरः ॥ १९५ ॥

जगद्बन्धध्वंसयशा जगज्जीवजनाश्रयः ।
वैकुण्ठलोकैकपतिर्वैकुण्ठजनवल्लभः ॥ १९६ ॥
प्रद्युम्नो रुक्मिणीपुत्रः शम्बरघ्नो रतिप्रियः ।
पुष्पधन्वा विश्वजयी द्युमत्प्राणनिषूदकः ॥ १९७ ॥
अनिरुद्धः कामसुतः शब्दयोनिर्महाक्रमः ।
उषापतिर्वृष्णिपतिर्हृषीकेशो मनःपतिः ॥ १९८ ॥
श्रीमद्भागवताचार्यः सर्ववेदान्तसागरः ।
शुकः सकलधर्मज्ञः परीक्षिन्नृपसत्कृपः ॥ १९९ ॥
श्रीबुद्धो दुष्टबुद्धिघ्नो दैत्यवेदबहिष्करः ।
पाखण्डमार्गप्रवदो निरायुधजगज्जयः ॥ २०० ॥
कल्की कलियुगाच्छादी पुनः सत्यप्रवर्तकः ।
विप्रविष्णुयशोऽपत्यो नष्टधर्मप्रवर्तकः ॥ २०१ ॥
सारस्वतः सार्वभौमो बलित्रैलोक्यसाधकः ।
अष्टम्यन्तरसद्धर्मवक्ता वैरोचनिप्रियः ॥ २०२ ॥
आपः करो रमानाथोऽमरारिकुलकृन्तनः ।
श्रुतेन्द्रहितकृद्धीरवीरमुक्तिबलप्रदः ॥ २०३ ॥
विष्वक्सेनः शम्भुसखो दशमान्तरपालकः ।
ब्रह्मसावर्णिवंशाब्धिहितकृद्विश्ववर्द्धनः ॥ २०४ ॥
धर्मसेतुरधर्मघ्नो वैध्यतन्त्रपदप्रदः ।
असुरान्तकरो देवार्थकसूनुः सुभाषणः ॥ २०५ ॥
स्वधामा सूनृतासूनुः सत्यतेजो द्विजात्मजः ।
द्विषन्मनुयुगत्राता पातालपुरदारणः ॥ २०६ ॥
दैवहोत्रिर्वार्हतोयो दिवस्पतिरतिप्रियः ।
त्रयोदशान्तरत्राता योगयोगिजनेश्वरः ॥ २०७ ॥
सत्रायणो बृहद्बाहुर्वैनतेयो विदुत्तमः ।
कर्मकाण्डैकप्रवदो वेदतन्त्रप्रवर्तकः ॥ २०८ ॥

परमेष्ठी सुरज्येष्ठो ब्रह्मा विश्वसृजांपतिः।
अब्जयोनिर्हंसवाहः सर्वलोकपितामहः॥ २०९॥
विष्णुः सर्वजगत्पाता शान्तः शुद्धः सनातनः।
द्विजपूज्यो दयासिन्धुः शरण्यो भक्तवत्सलः॥ २१०॥
रुद्रो मृढः शिवः शास्ता शम्भुः सर्वहरो हरः।
कपर्दी शङ्करः शूली त्र्यक्षोऽभेद्यो महेश्वरः॥ २११॥
सर्वाध्यक्षः सर्वशक्तिः सर्वार्थः सर्वतोमुखः।
सर्वावासः सर्वरूपः सर्वकारणकारणम्॥ २१२॥
इत्येतत्कथितं विप्र विष्णोर्नामसहस्रकम्।
सर्वपापप्रशमनं सर्वाभीष्टफलप्रदम्॥ २१३॥
मनःशुद्धिकरं चाशु भगवद्भक्तिवर्द्धनम्।
सर्वविघ्नहरं सर्वाश्चर्यैश्वर्यप्रदायकम्॥ २१४॥
सर्वदुःखप्रशमनं चातुर्वर्ग्यफलप्रदम्।
श्रद्धया परया भक्त्या श्रवणात्पठनाज्जपात्॥ २१५॥
प्रत्यहं सर्ववर्णानां विष्णुपादाश्रितात्मनाम्।
एतत्पठन्द्विजो विद्यां क्षत्रियः पृथिवीमिमाम्॥ २१६॥
वैश्यो महानिधिं शूद्रो वाञ्छितां सिद्धिमाप्नुयात्।
द्वात्रिंशदपराधान्यो ज्ञानाज्ञानाच्चरेद्धरेः॥ २१७॥
नाम्ना दशापराधांश्च प्रमादादाचरेद्यदि।
समाहितमना ह्येतत्पठेद्वा श्रावयेज्जपेत्॥ २१८॥
स्मरेद्वा शृणुयाद्वापि तेभ्यः सद्यः प्रमुच्यते।
नातः परतरं पुण्यं त्रिषु लोकेषु विद्यते॥ २१९॥
यस्यैककीर्तनेनापि भवबन्धाद्विमुच्यते।
अतस्त्वं सततं भक्त्या श्रद्धया कीर्तनं कुरु॥ २२०॥
विष्णोर्नामसहस्रं ते भगवत्प्रीतिकारणम्।

श्रीनारद उवाच ॥

धन्योऽस्म्यनुगृहीतोऽस्मि त्वयातिकरुणात्मना ।
यतः कृष्णस्य परमं सहस्रं नामकीर्तितम् ॥ २२१ ॥
यद्यालस्यात्प्रमादाद्वा सर्वं पठितुमन्वहम् ।
न शक्नोमि तदा देव किं करोमि वद प्रभो ॥ २२२ ॥

श्रीशिव उवाच ॥

यदि सर्वं न शक्नोषि प्रत्यहं पठितुं द्विज ।
तदा कृष्णेति कृष्णेति कृष्णेति प्रत्यहं वद ॥ २२३ ॥
एतेन तव विप्रर्षे सर्वं सम्पद्यते सकृत् ।
किं पुनर्भगवन्नाम्नां सहस्रस्य प्रकीर्तनात् ॥ २२४ ॥
यन्नामकीर्तनेनैव पुमान्संसारसागरम् ।
तरत्यद्धा प्रपद्ये तं कृष्णं गोपालरूपिणम् ॥ २२५ ॥

इति सात्वततन्त्रे श्रीकृष्णसहस्रनामषष्ठः पटलः ॥

---

श्रीशिव उवाच ॥

शृण्वन्ति प्रत्यहं ये वै विष्णोर्नामसहस्रकम् ।
कीर्तयन्त्यथवा विप्र संस्मरन्त्यादरेण वा ॥ १ ॥
शतं वा विंशतिं वापि दश वा पञ्च वा द्विज ।
एकं वा कामतो भक्त्या विष्णुपादाम्बुजाश्रयाः ॥ २ ॥
तेषां फलस्य पुण्यानां नान्तं पश्यामि नारद ।
यतस्तैर्भगवानेव परानन्दो वशीकृतः ॥ ३ ॥
यतो नामैव परमं तीर्थं क्षेत्रं च पुण्यदम् ।
नामैव परमं दैवं नामैव परमं तपः ॥ ४ ॥
नामैव परमं दानं नामैव परमा क्रिया ।
नामैव परमो धर्मो नामैवार्थः प्रकीर्तितः ॥ ५ ॥

नामैव कामो भक्तानां मोक्षोऽपि नाम केवलम् ।
एषां च साधनं नाम कामिनां द्विजसत्तम ॥ ६ ॥
नामैव परमा भक्तिर्नामैव परमा गतिः ।
नामैव परमं जाप्यं नामैव प्रार्थनं परम् ॥ ७ ॥
निःकामानां धनं नाम मुक्तिभुक्तिसुखार्थवत् ।
नाम स्यात्परमं सौख्यं नामैव वैराग्यकारणम् ॥ ८ ॥
सत्वशुद्धिकरं नाम नाम ज्ञानप्रदं स्मृतम् ।
मुमुक्षूणां मुक्तिपदं कामिनां सर्वकामदम् ॥ ९ ॥
वैष्णवानां फलं नाम तस्मान्नाम सदा स्मरेत् ।
सङ्केतितात्पारिहास्याद्धेलनाज्वरतापतः ॥ १० ॥
कीर्तितं भगवन्नाम सर्वपापहरं स्मृतम् ।
यावती पापनिर्हारे शक्तिर्नाम्नि हरेः स्थिता ॥ ११ ॥
तावत्पापिजनः पापं कर्तुं शक्नोति नैव हि ।
ज्ञानाज्ञानाद्धरेर्नामकीर्तनात्पुरुषस्य हि ॥ १२ ॥
पापराशिं दहत्याशु यथा तूलं विभावसुः ।
सङ्कीर्तितं हरेर्नाम श्रद्धया पुरुषेण वै ॥ १३ ॥
तस्य सत्यफलं धत्ते क्रमशो द्विजसत्तमः ।
पापनाशं महापुण्यं वैराग्यं च चतुर्विधम् ॥ १४ ॥
गुरुसेवामात्मबोधं भ्रान्तिनाशमनन्तरम् ।
सम्पूर्णानन्दबोधं च ततस्तस्मिन् लभेत्स्थिरम् ॥ १५ ॥

श्रीनारद उवाच ॥

चतुर्विधं त्वया प्रोक्तं वैराग्यं सुरसत्तम ।
एतद्वर्णय लोकस्य हिताय ज्ञानकारणम् ॥ १६ ॥

श्रीशिव उवाच ॥

असङ्गरहितो भोगः क्रियते पुरुषेण यत् ।
विषयाणां द्विजश्रेष्ठ तदमानः प्रकीर्तितः ॥ १७ ॥

भोग्ये स्वादुविहीनेऽपि क्रियते वृत्तिरात्मनः ।
द्वितीयो व्यतिरेकाख्यस्तद्विजानीहि सत्तम ॥ १८ ॥
मनसः प्रीतिराहित्ये इन्द्रियैरेव भुज्यते ।
भोगस्तृतीयः पुरुषैरिन्द्रियाख्यः प्रकीर्तितः ॥ १९ ॥
मनसश्चेन्द्रियाणां च रागराहित्यमुत्तमम् ।
विषयाहरणं विप्र चतुर्थः परिकीर्तितः ॥ २० ॥
एष नाम परश्चाशु जायते द्विजसत्तम ।
ज्ञानं च परमं शुद्धं ब्रह्मानन्दप्रदायकम् ॥ २१ ॥
तीर्थैर्दानैस्तपोभिश्च होमैर्जाप्यैर्व्रतैर्मखैः ।
योगैश्च विविधैर्विप्र यद्विष्णोः परमं पदम् ॥ २२ ॥
न यान्ति मानवास्तद्वै नामकीर्तनमात्रतः ।
संयान्त्येव न सन्देहं कुरु विप्र हरिप्रियम् ॥ २३ ॥
महापातकयुक्तोऽपि कीर्तयित्वा जगद्गुरुम् ।
तरत्येव न सन्देहः सत्यमेव वदाम्यहम् ॥ २४ ॥
कलिकालमलं चापि सर्वपातकमेव च ।
हित्वा नामपरो विप्र विष्णुलोकं स गच्छति ॥ २५ ॥
तस्मान्नामैकमात्रेण तरत्येव भवार्णवम् ।
पुमानत्र न सन्देहो विना नामापराधतः ॥ २६ ॥
तद्यत्नेनैव पुरुषः श्रेयस्कामो द्विजोत्तमः ।
विष्णोर्न कुर्यान्नाम्नस्तु दशपापान्कथञ्चन ॥ २७ ॥

श्रीनारद उवाच ॥

श्रुतो भवगवतो वक्त्राद्द्वाविंशदपराधकम् ।
विष्णोर्नाम्नां दश तथा एतद्वर्णय नो प्रभो ॥ २८ ॥

श्रीशिव उवाच ॥

श्रूयतामपराधान् वै विष्णोर्वक्ष्यामि नारद ।
यान् कृत्वा नरकं यान्ति मानवाः सततं मुने ॥ २९ ॥

अस्नात्वा स्पर्शनं विष्णोर्विना शङ्खेन स्नापनम् ।
अशौचे स्पर्शनं साक्षादभुक्त्वा पादोदकग्रहः ॥ ३० ॥
विना शब्देन पूजा च विना नैवेद्यपूजनम् ।
उच्चासनस्थपूजा च शीते व्यजनवातकम् ॥ ३१ ॥
उदक्यादर्शनं चैव घण्टाया भूनिवेशनम् ।
पौषे च चन्दनस्पर्शो ग्रीष्मे चास्पर्शनं तथा ॥ ३२ ॥
पुष्पं तोयेन संस्पर्शी विना होमं महोत्सवः ।
पूजां कृत्वा पृष्ठदर्शमग्रे च भ्रमणं तथा ॥ ३३ ॥
भोजनं भगवद्वारे अभुक्त्वा च विषादता ।
पादुकारोहणं विष्णोर्गेहे कम्बलवेशनम् ॥ ३४ ॥
वामपादप्रवेशश्च कूर्दनं पाकभोजनम् ।
श्लेष्मप्रक्षेपणं चैव तत्तृणैर्दन्तधावनम् ॥ ३५ ॥
देवाग्रे वाहनारोहो नैवेद्ये द्रव्यबुद्धिता ।
शालग्रामे स्थिरायां च शिलेति प्रतिमेति च ॥ ३६ ॥
हरिकीर्तेरसंश्लाघा वैष्णवे नरसाम्यता ।
विष्णौ च देवतासाम्यमन्योद्देशानिवेदनम् ॥ ३७ ॥
एतेऽपराधा द्वात्रिंशद्विष्णोर्नाम्नामथ शृणु ।
सतां नाम्ना शिवे विष्णौ भिदाऽऽचार्यावमानता ॥ ३८ ॥
वेदनिन्दा नाम्नि वादः पापेच्छा नामसाहसात् ।
नाम्नो धर्मैः साम्यबुद्धिर्दानं श्रद्धाविवर्जितैः ॥ ३९ ॥
श्रुत्वापि श्रद्धाराहित्यं कीर्तने चाप्यहन्मतिः ।
एते नाम्नां द्विजश्रेष्ठ ह्यपराधा मयेरिताः ॥ ४० ॥
वर्जनीया नृभिर्यत्नैर्यतो नरककारणाः ।

श्रीनारद उवाच ॥

विषयासक्तचित्तानां प्राकृतानां नृणां प्रभो ।
अपराधा हरेराशु वर्ज्या नैव भवन्ति हि ॥ ४१ ॥

अतो येन प्रकारेण तरन्ति प्राकृता अपि ।
अपराधान् कृतान्देव तन्ममाख्यातुमर्हसि ॥ ४२ ॥
श्रीशिव उवाच ॥
प्रदक्षिणशतं कृत्वा दण्डवत्प्रणमेद्भुवि ।
अपराधशतं तस्य क्षमते स्वस्य केशवः ॥ ४३ ॥
प्रदक्षिणं सकृत्कृत्वा यो न जानुशिरं नमेत् ।
निष्फलं तद्भवेत्तस्य तस्मात्प्रत्येकशो नमेत् ॥ ४४ ॥
जगन्नाथेति ते नाम व्याहरिष्यन्ति ते यदि ।
अपराधशतं तेषां क्षमते नात्र संशयः ॥ ४५ ॥
नाम्नोऽपराधास्तरति नाम्न एव सदा जपात् ।
विना भक्तापराधेन तत्प्रसादविवर्जितः ॥ ४६ ॥
सर्वापराधांस्तरति विष्णुपादाम्बुजाश्रयः ।
विष्णोरप्यपराधान्वै नामसङ्कीर्तनात्तरेत् ॥ ४७ ॥
विष्णुभक्तापराधानां नैवास्त्यन्या प्रतिक्रिया ।
श्रीनारद उवाच ॥
भक्तापराधान् मे ब्रूहि यथा तेषां प्रतिक्रिया ।
अनुग्रहाय लोकानां भगवन्ममचापि हि ॥ ४८ ॥
श्रीशिव उवाच ॥
विष्णुभक्तस्य सर्वस्वहरणं द्विजसत्तम ।
भर्त्सनं चोत्तमे भक्ते स्वप्ने चापि प्रहारणम् ॥ ४९ ॥
एतेऽपराधा भक्तानां शृण्वेषां प्रतिक्रिया ।
तद्धनं द्विगुणं दत्वा कृत्वा पादाभिवन्दनम् ॥ ५० ॥
कथयेन्मे क्षमस्वेति तद्दोषं धनकर्षणम् ।
यावत्तद्भर्त्सनं कृत्वा तावन्मासान्समाहितः ॥ ५१ ॥
निर्मत्सरः परिचरेत्तत्प्रसादेन शुद्ध्यति ।
यावज्जीवं प्रहारे तु परिचर्येदतन्द्रितः ॥ ५२ ॥

तत्प्रसादेन तत्पापान्निष्कृतिर्नान्यथा भवेत् ।
अकृत्वा निष्कृतीनेतान्नरकान्नास्ति निष्कृतिः ॥ ८३ ॥
अज्ञानतः कृते विप्र तत्प्रसादेन नश्यति ।
ज्ञानात्तु द्विगुणं कुर्यादेष धर्मः सनातनः ॥ ८४ ॥
पुत्रे शिष्ये च जायायां शासने नास्ति दूषणम् ।
अन्यथा तु कृते दोषो भवत्येव न संशयः ॥ ८५ ॥
केशाकर्षे पदाघाते मुखे च चपेटे कृते ।
न निष्कृतिं प्रपश्यामि तस्मात्तान्न समाचरेत् ॥ ८६ ॥

इति श्रीसात्वततन्त्रे सप्तमः पटलः ।

---

श्रीशिव उवाच ॥

अथ ते सम्प्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् ।
यच्छ्रद्धया तु तिष्ठन् वै हरौ भक्तिर्दृढा भवेत् ॥ १ ॥
देवे तीर्थे च धर्मे च विश्वासं तापतारणात् ।
तद्धित्वा कृष्णपादाम्बुशरणं प्रविशेन्मुदा ॥ २ ॥
शरणं मे जगन्नाथः श्रीकृष्णः पुरुषोत्तमः ।
तन्नाम्नि स्वगुरौ चैव ब्रूयादेतत्समाहितः ॥ ३ ॥
हित्वान्यदेवतापूजां बलिदानादिना द्विज ।
एकमेव यजेत्कृष्णं सर्वदेवमयं धिया ॥ ४ ॥
नित्यं नैमितकं कार्यं तथावश्यकमेव च ।
गृहाश्रमी विष्णुभक्तः कुर्यात्कृष्णं धिया स्मरन् ॥ ५ ॥
एतेषु चान्यदेवानां या पूजा विधिना स्मृता ।
सापि कृष्णार्चनात्पश्चात् क्रियेत हृदि तं स्मरन् ॥ ६ ॥
अन्यदा त्वन्यदेवानां पृथक्पूजां न च स्मरेत् ॥
काम्यं निषिद्धं च तथा नैव कुर्यात्कदाचन ॥ ७ ॥
कलत्रपुत्रमित्रादीन् हित्वा कृष्णं समाश्रिताः ।
हरिकीर्तिरता ये च तेषां कृत्यं न विद्यते ॥ ८ ॥

कृत्वान्यदेवतापूजां सकामां बलिना द्विज ।
भक्तिभ्रष्टो भवेदाशु संसारान्न निवर्तते ॥ ९ ॥
कामात्मा निरनुक्रोशः पशुघातं समाचरन् ।
पशुलोमसमं वर्षं नरके परिपच्यते ॥ १० ॥
यज्ञे पशोरालभने नैव दोषोऽस्ति यद्वचः ।
अपि प्रवृत्ती रागिणां निवृत्तिस्तु गरीयसी ॥ ११ ॥
कृत्वान्यदेवतापूजां पशुं हित्वा नराधमाः ।
यदि ते स्वर्गतिं यान्ति नरकं यान्ति के तदा ॥ १२ ॥
स मां पुनर्भक्षयिता यस्य मांसमदाम्यहम् ।
इति मांसनिरुक्तं वै वर्णयन्ति मनीषिणः ॥ १३ ॥
विष्णुभक्तिं समाश्रित्य पशुघातं समाचरन् ।
कृत्वान्यदेवतापूजां भ्रष्टो भवति निश्चितम् ॥ १४ ॥
मानुष्यं प्राप्य ये जीवा न भजन्ति हरेः पदम् ।
ते शोच्या स्थावरादीनामप्येकशरणा यदि ॥ १५ ॥
अहं ब्रह्मा सुरेन्द्राश्च ये भजामो दिवानिशम् ।
ततोऽधिकोऽस्ति को देवः श्रीकृष्णात्पुरुषोत्तमात् ॥ १६ ॥
यत्प्रसादं प्रतीक्षन्ते सर्वे लोकाः सपालकाः ।
सापि लक्ष्मीर्यच्चरणं सेवते तदनादृता ॥ १७ ॥
ततोऽधिकोऽस्ति को देवो लक्ष्मीकान्ताज्जनार्दनात् ।
यन्नाम्नि के न संयान्ति पुरुषाः परमं पदम् ॥ १८ ॥
धर्मार्थकाममोक्षाणां मूलं यच्चरणार्चनम् ।
ततोऽधिकोऽस्ति को देवः कृपासिन्धोर्महात्मनः ॥ १९ ॥
भजनस्याल्पमात्रेण बहु मन्येत यः सदा ।
ततोऽधिकोऽस्ति को देवः सुखाराध्याज्जगद्गुरोः ॥ २० ॥
येन केनापि भावेन योऽपि कोऽपि भजन् जनः ।
लभतेऽभीप्सितां सिद्धिं मोक्षं चाप्यकुतोभयम् ॥ २१ ॥

ततोऽऽधिकोऽस्ति को देवः देवकीदेविनन्दनात् ।
यो जगन्मुक्तये कीर्तिमवतीर्य ततान ह ॥ २२ ॥
अतोऽन्यदेवतापूजां त्यक्त्वा बलिविधानतः ।
सद्गुरोरुपदेशेन भजेत्कृष्णपदद्वयम् ॥ २३ ॥
शृणुयात्प्रत्यहं विष्णोर्यशः परममङ्गलम् ।
उच्चारयेन्मुखेनैव नाम चित्तेन संस्मरेत् ॥ २४ ॥
प्रीतिं कुर्याद्वैष्णवेषु अभक्तेषु विवर्जयेत् ।
दैवोपलब्धं भुञ्जानो नातियत्नं चरेत्सुखे ॥ २५ ॥
गृहेष्वतिथिवत्तिष्ठन्नयेतान्नैव बाधते ।
एषां बाधे पृथक्तिष्ठेद्वैष्णवेषु च सङ्गवान् ॥ २६ ॥
ब्रह्मचारी गृही वापि वानप्रस्थो यतिश्च वा ।
विना वैष्णवसङ्गेन नैवासिद्धिं लभेज्जनः ॥ २७ ॥
भक्तसङ्गं विना भक्तिर्नैव जायेत कस्यचित् ।
भक्तिं विना न वैराग्यं न ज्ञानं मोक्षमश्नुते ॥ २८ ॥
अत आश्रमलिङ्गांश्च हित्वा भक्तैः समं वसेत् ।
यत्सङ्गाच्छ्रुतिकीर्तिभ्यां हरौ भक्तिः प्रजायते ॥ २९ ॥
विष्णुभक्तप्रसङ्गस्य निमेषेणापि नारद ।
स्वर्गापवर्गौ न साम्यं किमुतान्यसुखादिभिः ॥ ३० ॥
अतो यत्नेन पुरुषः कुर्यात्सङ्गं हरेर्जनैः ।
तिर्यञ्चोऽपि यतो मुक्तिं लभन्ते किमु मानुषाः ॥ ३१ ॥
तत्सङ्गेनैव पुरुषो विष्णुं प्राप्नोति निश्चितम् ।
विना वैराग्यज्ञानाभ्यां यतो विष्णुस्तदन्तिके ॥ ३२ ॥
येषां सङ्गाद्धरेः सङ्गं सकृदाकर्ण्य मानवः ।
परित्यक्तुं न शक्नोति यदि भद्रसरिद्भवेत् ॥ ३३ ॥
अरसज्ञोऽपि तत्सङ्गं यदि याति कथञ्चन ।
भूत्वा रसज्ञोऽपि महान कर्मबन्धाद्विमुच्यते ॥ ३४ ॥

ततस्तद्धर्मनिरतो भगवत्यमलात्मनि।
प्राप्नोति परमां भक्तिं सर्वकामप्रदायिनीम् ॥ ३५ ॥
भक्तिं विदित्वा पुरुषो मुक्तिं नेच्छति कश्चन।
सालोक्यादिपदं चापि किमु चान्यसुखं द्विज ॥ ३६ ॥
फलं विना विष्णुभक्ता मुक्तिं यान्ति द्विजोत्तम।
तत एव विदुर्नान्य आनन्दमयमुत्तमम् ॥ ३७ ॥
यतो हरिर्लिखितवत् हृदये वर्ततेसदा।
तेषां प्रेमलताबद्धः परमान्दविग्रहः ॥ ३८ ॥

इतिश्रीसात्वततन्त्रेऽष्टमः पटलः।

---

श्रीनारद उवाच ॥

इयान् गुऽणोस्ति देवेश भगवत्पादसेवने।
कुतो भजन्ति मनुजो अन्यदेवं किमिच्छया ॥ १ ॥

श्रीशिव उवाच ॥

यदाऽऽदिसत्ये विप्रेन्द्र नरा विष्णुपरायणाः।
न यजन्ति विना ष्णुमन्यदेवं कथंचन ॥ २ ॥
तदात्मपूजाप्राप्त्यर्थं सर्वदेवमयं च वै।
पूजयामो हृषीकेशं कायवाङ्मनसा द्विज ॥ ३ ॥
तदा तुष्टो विभुः प्राह देवदवो रमेश्वरः।
अवतीर्य्य यजिष्यामि युष्माँल्लोकाँश्च याजयन् ॥ ४ ॥
ततः सर्वे जना युष्मान् यजिष्यन्ति समाहिताः।
अनेन पूजा युष्माकं भविष्यति सुखावहा ॥ ५ ॥
अहं चोक्तः पृथक् तेन श्रीनिवासेन ब्राह्मण।
कल्पितैरागमैर्नित्यं मां गोपाय महेश्वर ॥ ६ ॥
मदवज्ञापापहरं नाम्नां सहस्रमुत्तमम्।
पठिष्यसि सदा भद्रं प्रार्थितेन मया पुनः ॥ ७ ॥
ततो मे ह्यागमैः कृष्णमाच्छाद्य न तु देवताः।

यन्त्रैर्मन्त्रैश्च तन्त्रैश्च दर्शिताः फलदा द्विज ॥ ८ ॥
तैरागमैर्मन्दधिया हित्वा कृष्णं जगद्गुरुम् ।
भजन्ति देवता अन्या बलिदानेन नित्यशः ॥ ९ ॥
नाना देवान्समराध्य नानाकामसुखेच्छया ।
भोगावसाने ते यान्ति नरकं स्वतमोमयम् ॥ १० ॥
दृष्ट्वा तथाविधाँल्लोकान् पापाशङ्कितमानसः ।
गतोऽहं वासुदेवस्य चरणे शरणं द्विज ॥ ११ ॥
स्तुतिं च चक्रे प्रणतः प्रश्रयानतकन्धरः ।
समाहितमना विप्र प्राञ्जलिः पुरुषोत्तमम् ॥ १२ ॥
ॐ नमोऽस्तु कृष्णाय विकुण्ठवेधसे
त्वत्पादलीलाश्रयजीवबन्धवे ॥
सदाप्तकामाय महार्थहेतवे ।
विज्ञानविद्यानिधये स्वयम्भुवे ॥ १३ ॥
एकोऽसि सृष्टेः पुरतो लये तथा
युगादिकाले च विदां समक्षतः ।
अन्यत्र नानातनुभिर्विराजते
तस्मा अनन्ताचरिताय ते नमः ॥ १४ ॥
प्रधानकालाशयकर्मसाक्षिणे
तत्सङ्गहापारविहारकारिणे ।
कृष्णाय नानातनुमीयुषे समे
कृतानुरागाय नमो नमस्ते ॥ १५ ॥
शृण्वन्ति गायन्ति गृणन्ति ये यशो
जगत्पवित्रं जगदीशितुस्तव ।
तेऽन्यं न पश्यन्ति सुखाय ह्यात्मनो
विना भवत्पादनिषेवणाद्बहिः ॥ १६ ॥
निष्किञ्चना ये तव पादसंश्रयाः
पुष्णन्ति ते तत्सुखमात्मसम्भवम् ।

जानन्ति तत्त्वेन विदुस्ततः पराः
कामैः समाकृष्टधियो विचक्षणाः ॥ १७ ॥
अहं तु साक्षात्तव पादपङ्कजं
नित्यं भजानोऽपि पृथङ्मतिर्विभो ।
पुरात्ममानं प्रचिकीर्षुरात्मनः
सकाशतोऽप्यद्य मलं निकृन्तयन् ॥ १८ ॥
अथापि ते देव पदाम्बुजद्वयं
निष्कामलाभाय सदास्तु मे हरेः ।
यच्चिन्तनात्सर्वमनोऽनुकूलात्
सिद्धिर्भवत्येव किमु प्रकीर्तनात् ॥ १९ ॥
इति मे संस्तुतिं ज्ञात्वा भगवान्प्रणतार्तिहा ।
ममाक्षिगोचरं रूपमकरोत्स दयापरः ॥ २० ॥
सान्द्रानन्दमहेन्द्रनीलमणिवद्देहोद्गतप्रोल्लस-
त्स्वर्णैर्मौलिषु हारकुण्डलयुगैः केयूरकाञ्च्यङ्गदैः ॥
मञ्जीरैर्विलसत्पिशङ्गवलयं लक्ष्म्याङ्कितं शाश्वतम्
सर्वेशं करुणाकरं सुरवरैर्भक्तैः समासेवितम् ॥ २१ ॥
दृष्ट्वा तत्पदपङ्कजं हृदि दधे गोविन्ददामोदर
श्रीकृष्णेति मुखैर्वदन् त्रिजगतो भर्तुर्मुदाऽहं तदा ।
नेत्रैर्निर्झरवारिपूरमिव मे गात्रे च हर्षस्ततो
वाण्यां गद्गदतां विलोक्य भगवान् मामाह भक्तप्रियः ॥२२॥
ज्ञातं मे सुरवर्य वाञ्छिततरां मद्भक्तसङ्घावलिं
तत्तेऽहं प्रवदामि ते करुणया भक्ताय साकं वरैः ।
मल्लीलां गदतो भविष्यति भवत्सर्वे जना वैष्णवाः ।
भार्या चापि तथानुकूलसुखदा भक्ताग्रणीर्मे भवान् ॥ २३ ॥
एतावदुक्त्वा भगवान् गतो लोकमलौकिकम् ।
अहं च तान्वराँल्लब्ध्वा कृतार्थोऽस्मि द्विजर्षभ ॥ २४ ॥

अतस्तद्दिनमारभ्य पार्वती भुवनेश्वरी ।
मत्सङ्गाद्वैष्णवी भूत्वा मामापृच्छत्सुरेश्वरी ॥ २५ ॥
भवान्महाभागवतः कुमाराद्या महेश्वराः ।
कुबेराद्या देवताश्च नन्दीशाद्याश्च मे गणाः ॥ २६ ॥
पृथग्पृथगपृच्छन्मां कृष्णपादाम्बुजाश्रयाः ।
कथाः परमकल्याणीः सर्वलोकैकपावनीः ॥ २७ ॥
अथ मां पृच्छती वाक्यं मद्वाक्यं च द्विजोत्तम ।
संलिखत्यप्रमत्तोऽसौ गणेशो मत्सुतोऽन्तिके ॥ २८ ॥
मम तेषां च संवादं कला लोकमनोहराः ।
अभवँस्तत्र शास्त्राणि सर्वलोकहितानि वै ॥ २९ ॥
तानि तन्त्राणि श्रोतारः समानीय महीतले ।
स्थाने स्थाने मुनिश्रेष्ठ कथयिष्यन्ति भूरिशः ॥ ३० ॥
त्वमप्येनं सात्वताख्यं तन्त्रं भगवतः प्रियम् ।
नैमिषे शौनकादीनां समक्षं कथयिष्यसि ॥ ३१ ॥

श्रीनारद उवाच ॥

श्रुतं भगवतो वक्त्रात्तन्त्रं सात्वमुत्तमम् ।
तस्मिन्हिंसानिषेधं च श्रुत्वा मे संशयोऽभवत् ॥ ३२ ॥
वेदेन विहिता हिंसा पशूनां यज्ञकर्माणि ।
यज्ञे वधोऽवधश्चैव वेदविद्भिर्निरूपितः ॥ ३३ ॥
तन्निषेधे कथं श्रौतं स्मार्तं कर्म महेश्वर ।
वर्तेत सर्वलोकस्य इहामुत्रफलप्रदम् ॥ ३४ ॥

श्रीशिव उवाच ॥

प्रवृत्तं च निवृत्तं च द्विविधं कर्म वर्णितम् ।
श्रुत्या स्मृत्या च विप्रेन्द्र काम्यं कामिजनाय वै ॥ ३५ ॥
प्रवृत्तमविरोधेन कुर्वन्स्वर्याति मानवः ।
पुण्यावशेषे भूपृष्ठे कर्मसंज्ञिषु जायते ॥ ३६ ॥
निवृत्तमाचरन् योगी भोगेच्छात्यक्तमानसः ।

प्रयाति परमां सिद्धिं यतो नावर्तते गतः ॥ ३७ ॥
अतः प्रवृत्तिनिष्ठस्य नानाकामानुरागिणः ।
षड्विधैर्नियमैर्विप्राऽभ्यनुज्ञैव (प्र)दर्शिता ॥ ३८ ॥
विधिर्नैवास्ति हिंसायामभ्यनुज्ञा यतः कृता ।
अतो निवृत्तिर्हिंसायां यज्ञेऽपि कथिता बुधैः ॥ ३९ ॥
अहिंसा परमो धर्मः सर्ववर्णाश्रमादितः ।
स च आचरितो नृणामभीष्टफलदो भवेत् ॥ ४० ॥
विशेषतो विष्णुभक्ता हिंसाकर्म त्यजन्ति हि ।
अहिंसया हि भूतानां भगवानाशु तुष्यति ॥ ४१ ॥
अतः सर्वेषु भूतेषु भगवानखिलेश्वरः ।
प्रविष्ट ईयते नानारूपैः स्थावरजङ्गमैः ॥ ४२ ॥
मयापि ह्यागमे हिंसा विहिता या विधानतः ।
सापि कामुकलोकानां कामिताफलसिद्धये ॥ ४३ ॥
विष्णुभक्ता न वाञ्छन्ति मत्तोऽपि किंयदेव हि ।
अतस्तेषां विधानेऽपि हिंसा निन्द्या प्रकीर्तिता ॥ ४४ ॥
अतस्त्वं काम्यकर्माणि परित्यज्य विशेषतः ।
श्रूयाः कृष्णकथाः पुण्याः सर्वलोकेष्टसिद्धिदाः ॥ ४५ ॥
प्रवृत्तशास्त्रं शृणुयाच्छ्रुत्वा तत्परो भवेत् ।
निवृत्तेऽपि हरेर्भक्तियुतं मुख्यं प्रकीर्त्तितम् ॥ ४६ ॥
विशेषतः कृष्णलीलाकथा लोकसुमङ्गलाः ।
कीर्तयस्व द्विजश्रेष्ठ श्रूयाश्चैव निरन्तरम् ॥ ४७ ॥
हित्वान्यदेवशरणं भजनं च विशेषतः ।
ये भजन्ति हरेः पादं कृष्णैकशरणं नराः ॥ ४८ ॥
इहामुत्र ते नित्यं कृतार्था भगवत्प्रियाः ।
परमानन्दसन्दोहं प्राप्नुवन्ति निरन्तरम् ॥ ४९ ॥
ये तु नैवंविदोऽशान्ता मूढाः पण्डितमानिनः ।
यजन्त्यविरतं देवान्पशून्हत्वा सुखेच्छया ॥ ५० ॥

कामभोगावसाने तं ते च्छेत्स्यन्ति विनिश्चितम् ।
इत्येतत्कथितं विप्र तन्त्रं सात्वतमुत्तमम् ॥ ५१ ॥
ष्णुभक्तजनाजीव्यं सर्वसिद्धिप्रदायकम् ।
श्रवणात्कीर्तनादस्य कृष्णे भक्तिर्हि जायते ॥ ५२ ॥
भक्तिं लब्धवतः साधो किमन्यदवशिष्यते ।
यतो भगवता प्रोक्तं तस्य भक्तिविवर्द्धनम् ॥ ५३ ॥
तन्त्रेऽस्मिन्कथितं विप्र विश्वसम्भवमुत्तमम् ।
अवताराश्च श्रीविष्णोः सम्पूर्णांशकला भिदा ॥ ५४ ॥
भक्तिभेदाश्च भेदानां लक्षणं च पृथग्विधम् ।
युगानुरूपं श्रीविष्णोः सेवया मोक्षसाधनम् ॥ ५५ ॥
विष्णोर्नामसहस्रं च नाममाहात्म्यमुत्तमम् ।
विष्णोर्नाम्ना वैष्णवानामपराधस्य च निष्कृतिः ॥ ५६ ॥
सर्वसाररहस्यं च तन्त्रोत्पत्तेश्च कारणम् ।
हिंसाविधिनिषेधं च तव प्रश्नानुसारतः ॥ ५७ ॥

यन्नामैकं कर्णमूलं प्रविष्टं वाचान्विष्टं चेतनासु स्मृतं वा ।
दग्ध्वा पापं शुद्धसत्वात्तदेहं कृत्वा साक्षात्संविधत्तेऽनवद्यम् ॥५८
तस्मादनन्ताय जनार्दनाय वेदेरितानन्तगुणाकराय ।
महानुभावाय निरञ्जनाय नित्यात्मलाभाय नमो नमस्ते ॥५९॥

इति श्रीसात्वततन्त्रे श्रीशिवनारदसंवादे शिवाप्रार्थितगणेशलिखिते सात्वतजनप्रिये
नवमः पटलः ॥ शुभम् ।



८० (१) पाणिनिव्याकरणे वादरत्नम् । न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम् । ( तत्र च न्यास परिष्कारपरिशिष्ट भेदेन प्रकरण त्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४५ महताटोपेन न्यासाविचारिताः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः । [ व्या० वि १० ] रु० १—८ रु० १—४

८० (२) पाणिनीव्याकरणे वादरत्नम् । द्वितीयोभागः

८१ गणितकौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणित-संग्रहपुस्तकम् । [ गणितविभागे १ ] रु० ०—६

८२ छन्दः कौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्द-संग्रहपुस्तकम् । [ छन्दोविभागे ३ ] रु० ०—६

८३ योगदर्शनम् । महर्षिप्रवरपतञ्जलिप्रणीतम् । तत्र ( १ ) भोजवृत्तिः [ २ ] भावा-गणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम् । सटिप्पण । [ योग० विभागे १ ] रु० २—०

८४ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १ से ४ सर्गः मूल्यम् रु० १—४—० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः । रु० १—८

८५ योगदर्शनम् । पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम् । सटिप्पण । [ योग वि० २ ] १—०

८६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो-भागः । [ काव्यविभाग १३ ] रु० ०—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८८ मेघदुतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण-शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [ काव्य०४ ] रु० १—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे ९ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । (व्या० वि० ११) पूर्वार्द्धम् । रु० २—८ उत्तरार्द्ध। रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम्।(पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त-मिश्र विरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३) रु० १—४

९५ संस्कारदीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । संपूर्णः । ( कर्मकाण्ड वि० ८ ) रु० ८—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः । म० म० पं० नित्यानन्दपन्त पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । (कर्म० वि० १०) रु० २—०

९८ नलचम्पूः अथवा दमयन्ताकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१५) रु० १-४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभाख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छन्दोनिबन्धः, श्रीमता दैवज्ञाग्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४) रु० २—८

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । (न्याय विभागे ४) ) रु० १—८

१०२ वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः ) । [ वेद० वि० ५ ] रु० २—८

१०३ माधवीयधातुवृत्तिः । श्रीमत्सायणाचार्यविरचिता । ( व्या० वि० १२) रु० ५—०

१०४ बौधायनधर्मसूत्रम् । श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । [कर्म०वि० ११] रु० ४—०

१०५ ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( प्रथमोभागः ) ( वेद वि० ६ ) रु० ५—०

१०६ न्यायमञ्जरी । जयन्तभट्टकृता । न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता । द्वितीयोभागः । [ न्या० वि० १५ ] रु० ३—०

१०७ शारदातिलकम् । श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम् । ( तन्त्रशा० वि० १ ) रु० ५—०

१०८ मन्त्रार्थदीपिका । म० म० श्रीशत्रुघ्नविरचिता । ( वेद० वि० ७ ) रु० २—०

१०९ शब्दशक्तिप्रकाशिका । श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता । श्रीकृष्णकान्तविद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता । न्यायाचार्य काव्यतीर्थ पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता । (न्या वि० १६) रु० ४—८

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणाद्योतितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, एतदीयसंशोधनसम्पादनकर्मीकृतं च । ( योगशास्त्रविभागे ३ ) रु० ५—०

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।